# ॥ अथ वेदान्तचिन्तामणिः ॥

## तत्र प्रथमं प्रकरणम् ॥

॥ श्रीगणेशाय नमः ॥ श्रीगोपालकृष्णाय नमः ॥

शुद्धाद्वैतं सर्वशक्ति जडजीवादिकारणम् ॥ साकारं सच्चिदानन्दं वन्दे श्रीपुरुषोत्तमम् ॥१॥
मायावादतमोनाशभक्तिमार्गप्रकाशयोः ॥ सूर्याचन्द्रमसौ स्तौमि श्रीमद्वल्लभविठ्ठलौ ॥२॥
भक्तो गुरुश्रीव्रजवल्लभस्य पितुर्घनश्यामत आप्तविद्यः ॥
गोवर्द्धनो बालनिबोधनाय वेदान्तचिन्तामणिमातनोति॥३॥
अथैतद्विश्वमखिलं नानारूपं निरीक्ष्यते॥ अतीव चित्रमेतस्य कारणं परिचिन्त्यताम् ॥४॥
यत्पूर्ववृत्ति नियतं यदुत्पत्तावपेक्ष्यते ॥ तत्तस्य कारणं प्रोक्तं कार्यमुत्पाद्यमस्य यत् ॥५॥
यथा मृत्सा कुलालश्च दण्डादिर्घटकारणम्॥ तथेदं किमुपादाय केन वा निर्मितं भवेत् ॥६॥
चेतनस्य मनुष्यादेः पितरौ तत्तथाविधौ ॥ जडस्याप्यथ वृक्षादेर्बीजाद्यं यद्यपि स्फुटम् ॥७॥

१ कारणम् २ कार्यानुरूपौ.

पित्रोः पितामहौ मातामहौ तेषां तथेतरे॥एवं विचारे को वादौ किं च सर्गोऽस्ति मैथुनात्॥८
किमादौ पुरुषः स्त्री वोभयं वेत्यपि संशयः॥एवं जडेऽपि वृक्षस्य बीजं तत्फलतः फलम्॥९
वृक्षाद्वृक्षाङ्कुरं बीजात्तरुर्वा बीजमादिमम्॥नाव्यवस्यति धीः किंचिदन्ततः परिचिन्तने॥१०
तस्मात्सर्वप्रपञ्चस्य निदानं ब्रह्म केवलम्॥आदित्वादद्वितीयत्वात्सर्वरूपत्वशक्तितः॥११
सर्वधर्मविशिष्टत्वादैश्वर्यात्तत्प्रसिद्धितः॥ स्वयमेव स्वेच्छयेदं स्वरूपादुदपादयत् ॥ १२ ॥
यथोर्णनाभिर्लालात आलयं सृजतीच्छया॥पात्यस्येवं त्वस्यसृष्टिस्थितिसंहृतयस्ततः॥१३
पञ्चभूतात्मकं सर्वं किं न तान्येव कारणम्॥निरास्पदत्वं नैषां चोचितो योगः स्वतो यतः॥
कालजीवादयो नैतन्मयास्तेषां कुतो भवः॥ किं च पञ्चैव तान्येवंस्वभावान्येव वा कुतः॥१५॥
अतोऽवश्यं सर्ववीजं स्वतन्त्रश्चैक ईशिता ॥ प्रवर्त्तको नियन्ता च यो हेतुः स्थितिनाशयोः॥
तद्ब्रह्म क्वास्ति सर्वत्र व्याप्तं व्योमेव तद्यपि॥कस्मान्न दृश्यतेऽस्माभिस्तिरोभूय यतः स्थितम्
घर्म्मं न नाशयेद्वायुः सन्नप्यारुद्धकन्दरे॥ व्यजनेनाऽनुभूयेत तथा ज्ञानेन दृश्यते ॥ १८॥
घटादि न विलोक्येत तिरस्करणिकावृतम्॥ मायाजवनिकाच्छन्नं तथा ब्रह्म न लक्ष्यते॥१९

१ सर्वज्ञः सर्वशक्तिमान्कश्चिदेक एवास्य जगतः कर्तेति सर्वमतेषु प्रसिद्धम्.

अस्त्येव तत्पिकाःकाकाःशुका हंसाःकलापिनः।असिता हरिताःश्वेताःकृता येन च चित्रिताः
परस्परविरुद्धस्यातिविचित्रस्वरूपिणः ॥ यद्विश्वस्योद्भवे हेतुर्नियमेन.यथोचितम् ॥ २१ ॥
सूर्य्यादीनां सुदुर्ज्ञेययाथात्म्यानां प्रकाशनम्॥निराधारे स्थितिर्याति नियता नित्यता यतः॥
एवंविधैः श्रुते दृष्टैः प्रकारैर्बहुभिः स्फुटैः ॥ स्थिरेण मनसा स्पष्टं ब्रह्म निश्चीयतां दृढम् ॥२३॥
कुसुमाञ्जलिमुख्येषु ग्रन्थेष्वीशेऽनुमाशतम् ॥ अदर्श्युदयनाचार्यादिभिस्तेनोदितं यथा ॥

कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः ॥
वाक्यात्संख्याविशेषाच्च साध्यो विश्वविदव्ययः ॥२५॥

जडं भूतादिकं जीवान्सृष्ट्वान्यदपि भूततः।न्यूनाधिकत्वतो देहाश्चित्रा नानाविधाः कृताः ॥
तेषु जीवादि संस्थाप्य माययाऽमोहयत्स्वया॥ मोहिता न विजानीमो ब्रह्म किं कीदृशो वयम्।
श्रुतिष्वपि पुराणेषु ब्रह्मादीनां भवस्ततः॥बहुधा मानवादीनां सर्गोऽस्तीत्यवधार्यताम् ॥२८
एवं सृष्ट्वा प्रवृत्त्यर्थं मर्यादां पापपुण्ययोः ॥ सर्वोऽज्ञापयितुं चान्यद्वेदा आविष्कृताः स्वतः ॥

१ गतिः २ अन्तर्यामिप्रभृति ३ पार्थिवानां शरीराणामर्द्धेन पृथिवी भवेत्यादिवचनैः
४ आदिशब्देन प्राणेन्द्रियादिसंग्रहः ५ स्वस्वरूपज्ञानभक्त्यादिकम्

सोपांया सफला कर्ममर्य्यादा तत्र रूपिता॥ज्ञानार्थं स्वस्वरूपं च मुक्तिर्भक्तिश्च दर्शिता ॥३०
इदं यः सुकृतं कुर्य्यात्स इदं सुखमाप्नुयात्॥इदं च दुष्कृतं कृत्वेदं भुञ्जीत स दुष्फलम्॥३१॥
वेदेषु विद्यमानेषु विविच्योपदिशत्स्वपि ॥ यथा यथा यः कुरुते ददात्यस्मै तथा तथा ॥३२॥
कर्मानुसारतो वंशो देहो विद्या च वैभवः ॥ इत्यादि प्राप्यते सर्वं प्राप्तदेहादिसंभवैः ॥ ३३ ॥
कर्मभिश्चापरं सर्वं तज्जैस्तैश्चान्यदाप्यते ॥ वहुपापास्तु नरकं बहुपुण्याः सुरालयम् ॥३४॥
गच्छन्ति यातनादेहं पुण्यदेहं च संश्रिताः ॥ तत्र भुक्त्वा भुवं याताः प्राप्नुवन्ति तथाखिलम् ॥
अखण्डोऽनन्त एतादृक्प्रवाहोऽयं प्रवर्त्तते॥यथा प्रावृड्जलैर्नद्याः प्रवाहो ह्यपराहतः॥३६॥
जगदीशस्य लीलायं प्रपञ्चो निखिलो मतः॥मृत्पुत्तलेषु राजानममात्यमनुगादिकम्॥३७॥
यथा बालः करोत्येवमत्रेशोऽपि निजेच्छया ॥ क्वचित्सख्यं क्वचिद्वैरमित्याद्यप्यखिलं तथा
वहुप्रपञ्चा दृश्यन्ते क्रीडा वुद्धिवलादयः॥साश्चर्या अपि जीवानां यद्यल्पविषया अपि॥ ३९
विश्वं त्वनन्तविषयमीशक्रीडात्मकं तदा॥अकुञ्चितप्रपञ्चं च साश्चर्यं न कुतो भवेत् ॥४०॥
केषांचिद्दारुखण्डानां नाम भूपादि कथ्यते॥ निर्धारिताश्च गतयस्तत्पट्कस्यैव काश्चन॥४१

१ प्रायश्चित्तादिरुपायः २ अविच्छिन्नः ३ समाप्तिशून्यः

आधारोऽपि चतुःपष्ठिनिलयोऽकारि नागरैः॥विधीयते शुद्धमात्रं यदि तत्राप्यनन्तता॥४२॥
तदात्र किमु वक्तव्यं प्रपञ्चे भगवत्कृते॥ तद्वदत्राप्यथाधारो ब्रह्माण्डानि बहूनि तु॥४३॥
पाञ्चभौतिकपिण्डानां संज्ञा नानाविधाः कृताः॥अनेकेषामिन्द्रियतः कृता नाना प्रवृत्तयः॥
प्रवृत्तिजन्यकार्याणि मानसान्यपि भूरिशः॥सदसत्कर्मभिर्बह्व्यो गतयोऽपि विनिश्चिताः॥
लीलार्थमीश्वरत्वार्थमचिन्त्यानन्तशक्तिना॥स्वरूपात्स्वेच्छया तेन प्रपञ्चः प्रकटीकृतः॥
अहंताममताबद्धा माययान्धास्तदिच्छया॥ सर्व एव प्रवर्तन्तेऽत्र परंपरयोक्तया ॥४७॥
तदंशा अखिला देवाः सकामा आश्रयन्ति तान्॥ तत्तद्ददाति तद्द्वारा तेभ्यो माहात्म्यवृद्धये
यस्तु सम्यग्विजानीयात्स संसाराद्विमुच्यते॥सर्वात्मना भजेद्योऽस्य न किंचिदपि दुर्लभम्
गर्भेऽवनान्मातृदुग्धादिना चोपकृतं बहु॥येनेशः सदयाम्भोधिर्हरिः कस्मान्न सेव्यते॥५०॥
स च स्वल्पेन संतुष्येत्स्वस्यापि स्यात्सुखं यतः॥ऐहिकामुष्मिकं मोक्षः सुलभो यदि वाञ्छयते
यतन्ते मनुजा लोके राज्ञोऽपि हि समागमे॥ समागमेऽखिलेशस्य यतितव्यं कुतो न वा॥५२
समागमोऽस्य ज्ञानेन तज्ज्ञानं वेदशास्त्रतः॥समीपस्थगिरा राज्ञोऽपि प्रकृत्यादि बुद्धयते॥
वेदस्य दुर्विबोधत्वाल्लोकानुग्रहकारिभिः॥ईश्वरानुज्ञयोक्तानि सच्छास्त्राणि मुनीश्वरैः॥५४

वेदार्थ एव बोधार्थं सच्छास्त्रेषु विविच्यते॥मन्तव्या सावधानैर्वाग्वेदशास्त्रमयी शितुः॥५५॥
ऋते गुरुं तयोरर्थो मननार्हो न बुद्धयते ॥ परंपराप्राप्तविद्योऽतः कश्चित्सद्गुरुर्गतिः ॥५६॥
वेदज्ञानाद्गुरुप्रासादुपदेशपुरःसरात् ॥ केवलाद्वोपदेशाच्चेद्धजेत्तुष्येत्स नान्यथा ॥ ५७ ॥
शीघ्रतद्दर्शकान्प्राप्य महामन्त्रान्सतो गुरोः॥वेदार्थेऽथ परिश्राम्येच्छक्त्यासक्तो हरिं भजेत्
गुर्वाज्ञया सानुरागं सश्रद्धं पुरुषोत्तमम् ॥ शुद्धभावो भजेन्नित्यं यथाशक्त्युपचारतः ॥५९॥
लोकेऽपि शरणायातान्सर्वस्वाविनिवेदकान्॥यदि तुच्छोऽपि बलवान्कथंचिदपि न त्यजेत्॥
तर्हि यः सद्गुरुद्वारा तमेकं शरणं व्रजेत् ॥ सर्वं समर्पयेत्तस्मै कथं त्यक्ष्यति तं प्रभुः ॥ ६१ ॥
योगिनामपि दुर्दर्शः साक्षाद्यावन्न दृश्यते॥ शुद्धरूपादिबुद्धयर्थं तावत्तत्प्रतिमार्चनम्॥६२॥
तत्राविश्य स्थितो मन्त्रवशो गृह्णाति सोऽर्पितम् ॥भक्तानां त्वथ तत्रैव साक्षादनुभवोऽखिलः
गोपीचन्दनमुद्राभिस्तुलसीमालया गले॥गुरूपदिष्टाः शुद्धोर्ध्वपुण्ड्रास्तस्यातिवल्लभाः ॥६४
यथावश्यकवस्त्रादि न धृत्वा नृपमन्दिरम्॥तदीया नैव यान्त्येवमत्राप्येतत्त्रयं विना ॥६५॥
वैष्णवानां चिह्नमूर्ध्वपुण्ड्रं माला च कण्ठगा॥लोकानां लक्षणं किंचिद्राजसंबन्धिनामिव॥६६
गुरूपदेशमादाय तस्माद्भूत्वा सुवैष्णवाः ॥धृत्वा च स्वामिचिह्नानि सेवन्तां सन्ततं हरिम्॥

पूर्णानन्दमयं यद्ब्रह्म परं सर्वदैव सेवध्वम्। बुद्ध्यध्वं स्थिरमनसा तद्वेदादिमनिरन्तराभ्यासात्

इतिश्रीमद्वल्लभाचार्यमतवर्तिश्रीव्रजवल्लभचरणानुचरपञ्चनदीघनश्याममट्टात्मजगोवर्द्धनशर्मकविविरचिते वेदान्तचिन्तामणौ नास्तिक्योच्छेदकशास्त्रार्थसंग्रहाख्यं प्रथमं प्रकरणम् ॥ १ ॥

## अथ द्वितीयं प्रकरणम् ॥

शाब्दमेव प्रमाणं स्यात्परोक्षब्रह्मनिश्चये॥ अलौकिकं स्वतन्त्रं च साक्षात्तत्प्रतिपादकम्॥१॥
वेदाः श्रीकृष्णवाक्यानि व्याससूत्राणि चैव हि॥ समाधिभाषा व्यासस्य प्रमाणं तच्चतुष्टयम्॥
उत्तरं पूर्वसंदेहवारकं परिकीर्तितम् ॥ अविरुद्धं तु यत्त्वस्य प्रमाणं तच्च नान्यथा ॥ ३ ॥
एतद्विरुद्धं यत्सर्वं न तन्मानं कथंचन ॥ इत्युक्तमाचार्य्यपादैः प्रमाणानां विनिर्णये ॥ ४ ॥
स्वस्वरूपं हि बोधार्थं वेदेष्वेव निरूपितम् ॥ सर्गादीनां प्रकाराश्च भक्तिर्मुक्तिश्च वर्णिता ॥
परोक्षाचिन्त्यरूपं यद्विस्पष्टं साधनं फलम् ॥ अतस्तैरेव जानीयुर्मायामोहितबुद्धयः ॥ ६ ॥
वेदास्ते स्वात्मकास्तेनोपदिष्टा ब्रह्मणे पुरा॥ तेनर्षिभ्यः स्वशिष्येभ्यस्तैस्तैः स्वेभ्यश्च दर्शिताः

१ श्रीभागवतम्

एवं परंपराप्राप्ता आम्नाया भगवन्मयाः ॥
(स्कन्ध ६) वेदो नारायणः साक्षात्स्वयंभूरिति शुश्रुम ॥८॥
श्वेताश्वतरे ॥ यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ॥
तꣳह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥ ९ ॥
(स्कन्ध ११) कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता ॥
मयादौ ब्रह्मणे प्रोक्ता धर्म्मो यस्यां मदात्मकः ॥१०॥
श्रुतिभागवतादौ तत्स्पष्टमेवावगम्यते ॥ बहुप्रकारैर्वेधार्थं तत्र ब्रह्मैव रूप्यते ॥ ११ ॥
नारायणपरा वेदा इति भागवतादिषु ॥ वेदैश्च सर्वैरहमेव वेद्य इति हि स्मृतिः ॥ १२ ॥
तत्रावशिष्टं हरिणा विरक्तायार्जुनाय तत् ॥ तथा तदधिकारेण स्मृतिरूपेण रूपितम् ॥ १३
सूत्रे पूर्वपरूपत्वं वाक्यशेषत्वमुच्यते ॥ वेदोऽपि ब्रह्मवाक्साक्षात्तेन स्यादेव वेदता ॥ १४ ॥
पाद्मे गीतामाहात्म्ये ॥ गीता सुगीता कर्तव्या किमन्यैः शास्त्रविस्तरैः ॥
या स्वयं पद्मनाभस्य मुखपद्माद्विनिर्गता ॥ १५ ॥

---

१ श्रुतिस्मृतिरूपत्वम् २ वेदवाक्यशेषत्वं गीतायाः ३ ईश्वरवाचि

वेदस्य दुर्ज्ञेयार्थत्वाच्छास्त्रं संदेहवारकम् ॥ व्यासेनाविष्कृतं सूत्रमयं ब्रह्मनिरूपकम्॥१६॥
तच्छिष्यो जैमिनिरपि वेदैर्धर्मं व्यचारयत्॥एवं कृत्स्नो हि वेदार्थो मीमांसातोऽवसीयते॥
व्यासो निर्णीतवान्ब्रह्मस्वरूपं साधनं फलम्॥ श्रुतितः स्मृतितः शास्त्रे न्यपेधत्तदसंमतम्॥
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः॥ प्रामाण्यमिति गीतासु तस्य भागवतेऽपि च ॥१९॥
(स्कन्ध १) जिज्ञासितं सुसंपन्नमपि ते महदद्भुतम् ॥
जिज्ञासितमधीतं च यत्तद्ब्रह्म सनातनम् ॥२०॥
भारतेऽदर्शि वेदार्थः पुराणैरपि कैश्चन ॥ सूत्रकर्तुस्तथाप्यात्मा नात्यतुष्यद्यदा तदा ॥२१॥
तस्मै नारदवाग्द्वारोपदिष्टाय समाधितः॥ भगवान्दर्शयामास रूपं भागवतात्मकम् ॥२२॥
यथापश्यत्तथैवाविश्चकाराक्षरशोऽखिलम्॥ श्रीभागवतरूपस्त्वं प्रत्यक्षः कृष्ण एव हि॥२३
इति पाद्मे स्फुटं ज्ञानावतारो बादरायणः॥ समतुष्यत्तदा कृष्णदशालीलादिकीर्तनात् ॥२४

१ अथातो ब्रह्मजिज्ञासेत्यादिचतुरध्यायम् २ प्रथमेऽध्याये ३ तृतीयेऽध्याये ४ चतुर्थे ५ द्वितीये ६ श्रुतिस्मृत्यसंमतं सांख्यादि मतम् ७ अत्र सर्गो विसर्गश्च स्थानं पोषणमूतय इत्याद्या दश आदिशब्दादधिकारो ज्ञानं च

भगवान्ब्रह्मणे देवर्षये स मुनये च सः ॥ प्राकाशयदिदं व्यासः प्राडुश्चक्रे शुकादिभिः ॥२५॥
कस्मै येनेत्यादि तत्रानेकत्रैतत्प्रदृश्यते ॥ अन्यत्स्मृतिपुराणाद्यप्यासीत्ताद्दग्वरीच्छया॥२६
एवमेतानि चत्वारि संशयघ्नानि च क्रमात् ॥प्रकाशितानि हरिणा जीवानुग्रहकारिणा ॥२७
अनादित्वाच्च भगवद्रूपत्वात्सर्वनिर्णये ॥ सर्वथैव प्रमाणं स्यादेषामक्षरमक्षरम् ॥ २८ ॥
अन्यदेभ्यो वहुतरमविरुद्धं प्रमापकम् ॥ विरोधीन्यप्रमाणानि मोहशास्त्राणि सृष्टये ॥२९
विरुद्धधर्माचिन्त्यं तत्परोक्षं महदद्भुतम् ॥ अलौकिकेन शाब्देन ज्ञातुमेतेन शक्यते ॥३०॥
यद्यदिष्टं तु तत्सर्वं यद्वशे मृत्युरप्यसौ ॥ अवश्यमेव ज्ञातव्यं तद्दुःखातिनिवृत्तये ॥ ३१ ॥
(स्कन्ध ११ ) लब्ध्वा सुदुर्लभमिदं वहुसंभवान्ते मानुष्यमर्थदमनित्यमपीह धीरः ॥
तूर्णं यतेत न पतेदनुमृत्यु यावन्निःश्रेयसाय विषयः खलु सर्वतः स्यात् ॥ ३२ ॥
न जन्मनःप्राक्पितरौ नापत्यं मृत्यनन्तरम्॥न स्त्री स्वीया विवाहात्प्राक्तस्मात्तन्ममता वृथा
विक्रीते गृहभूपादौ नष्टे दुःखं न जायते ॥ अविक्रीते तु जायेत ममता तत्र कारणम् ॥३४॥
देवदत्ताभिधे देहे मंध्येऽहमिति मन्यते॥क्षणान्तरे मृतौ देहः क्व वा जीवः क्व गच्छति ॥३५

१ द्वादशस्कन्धे कस्मै येन विभासितोऽयमतुलो ज्ञानप्रदीपः पुरेत्यादि २ मद्व

करोत्यघं कुटुम्बार्थं मृते तद्रोदिति क्षणम् ॥न महायस्तदा दूतैर्यदा नीयेत यातनाम् ॥३६॥
प्रिया स्त्री तनया गेहं धनाद्यत्रैव तिष्ठति ॥ देहोऽपि किं तु यात्येकः पापपुण्यसहायवान् ॥
मुनिभिःसर्वगतिभिःस्वस्थानां ग्रहणादिकम् ॥यथा तथाऽधोलोकस्य गतयोऽपि विनिश्चिताः
देहेऽहंता च गेहादौ ममता मायया तु या ॥ ते संसारो वृथैतज्जं रागवैरादिकं त्यज ॥३९॥
सदा संबन्धिनं सर्वदुःखघ्नं नित्यमीश्वरम् ॥ स्नेहाद्भज महानन्दोऽमृतदेहो भविष्यसि॥४०॥
असेवने महान्दोषः पाद्मे यज्जीवलक्षणे ॥ दासभूतो हरेरेव नान्यस्यैव कदाचन ॥४१॥
इत्यसौ सहजो दासो जीवः सृष्टः स्वभक्तये॥अभजंस्तं तु तद्दत्तं यो भुङ्क्ते स्तेन एव सः॥४२

(भागवते) नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारम् ॥
मयानुकूलेन नभस्वतेरितं पुमान्भवाब्धिं न तरेत्स आत्महा ॥४३॥

अतोऽवश्यं सेवनीयो निरपेक्षोपकारकृत् ॥ज्ञातव्यश्च यथार्थो स्याद्भक्तिर्ज्ञानं विना न यत् ॥
वेदादिनिष्ठा मुनयो बहवो ज्ञानचक्षुषः ॥ अपश्यन्भक्तियोगेन संप्राप्तुस्तं पुराविदः ॥४५॥
यतमानो विंदे वेदैः शक्त्यां दीनो भजेद्रतः॥माहात्म्यज्ञोऽस्य कृपया सुलभं स्यात्सुदुर्लभम्

१ ज्ञानाय

सर्वैरनन्यशरणैःप्रवर्ण्यमानं प्रमाणवन्दिगणैः॥महतः फलान्तरज्ञं भजामि बीजं प्रपञ्चतरोः ॥ ७ ॥

इतिश्रीमद्वल्लभाचार्यमतवर्तिश्रीव्रजवल्लभचरणानुचरगञ्चनदीघनश्याममट्टात्मजगोवर्द्धनशर्मप्रकविनिरचिते वेदान्तचिन्तामणौ प्रमाणनिरूपणं नाम द्वितीयं प्रकरणम् ॥ २ ॥

## अथ तृतीयं प्रकरणम्

शुद्धाद्वैतैकरूपाय शुद्धद्वैतप्रदर्शिने ॥ शक्त्या सर्गादिलीलाय नमोऽस्त्वद्भुतकर्मणे ॥ १ ॥
स विश्वं लीलयैवेदं सृजत्यवति हन्त्यजः ॥ तथा यतो वा इमानि भूतानीति प्रपठ्यते ॥ २ ॥
तैत्तिरीयेषु तस्माद्वा एतस्मादिति च स्फुटम् ॥ तदस्य ब्रह्मरूपत्वं ब्रह्मकार्यस्य युज्यते ॥ ३ ॥
मृदुद्भूतघटादीनां मृण्मयत्वं निरीक्ष्यते ॥ यत्सर्वं खल्विदं ब्रह्म तज्जलानिति हि श्रुतिः ॥ ४ ॥
सर्वं पुरुष एवेदं भूतं भव्यं भवच्च सत् ॥ इति भागवते[1] सूक्तं पौरुषं समनूदितम् ॥ ५ ॥
यथा घटशरावाद्याकृतिमात्रेण भिद्यते ॥ न भिद्यते मृण्मयत्वात्तथैवात्र चराचरम् ॥ ६ ॥
सद्रूपा प्रथमावस्था मध्ये भिद्येत कारणात् ॥ घटाद्याकारभेदेन मृत्सा तद्वदपि वस्तुतः ॥ ७ ॥
लयेऽपि शकलाः सूक्ष्माः सूक्ष्मा जायन्त एव हि॥ते मृद्येव प्रलीयन्त इत्यन्तेऽप्यस्य मृत्तिका

---

[1] द्वितीयस्कन्धे

तथा ब्रह्मैवात्र पूर्वमन्ते ब्रह्मैव शिष्यते॥ मध्ये क्रीडार्थभेदार्थं नाना तेनेच्छया कृतम् ॥९॥
सर्वाकारं सर्वशक्तिसर्वधर्माश्रयो हि तत् ॥ सच्चिदानन्दरूपं च तस्मादाविरभूज्जगत् ॥ १०
जडजीवान्तरात्मानः पूर्वमाविष्कृता इमे ॥ एकं द्वयं त्रयं तत्र भेदायास्थापयद्विभुः ॥ ११॥
जडे सदंशः प्रकटश्चिदानन्दौ तिरोहितौ ॥ जीवे च सच्चितावन्तर्यामिण्येतत्त्रयं स्फुटम् ॥१२॥
सन्नाम विद्यते चिच्च चैतन्येन प्रकाशते ॥ आनन्दः प्रियतातीवेत्येषां प्रत्यक्षलक्षणम् ॥१३॥
जडं सर्वं मृदश्मादि क्रियाशून्यं स्वतो हि यत्॥सत्तामात्रं जडस्यास्ति न प्रीतिर्न प्रकाशनम्।
तनोर्यत्संबन्ध एव श्वासादिर्न शवेऽन्यथा॥सोऽणुमात्रश्च हृत्स्थानो जीवो जीवनकारणम् ॥
स विद्यतेऽखिले देहे चैतन्येन प्रकाशते ॥ जीवेन विषयानन्दो यद्यप्येषोऽनुभूयते ॥ १६ ॥
न्यूनाधिकः स क्षणिको न पूर्णानन्द उच्यते॥ तस्यैवानन्दस्य मात्रामुपजीवन्ति हि श्रुतिः ॥
भिन्नः प्रतिशरीरं योऽणुर्हृत्स्थो हंसशब्दभाक्॥साक्षी सोऽन्तःस्थितः स्पष्टं तत्र तत्त्रयमेव हि
भूतैर्नाना तनूः सृष्ट्वा जीवान्तर्यामिणावुभौ ॥ प्रत्येकं संस्थाप्य जीवान्माययामोहयत्प्रभुः ॥

१ चेष्टा २ चेतनासमवधानात् ३ अस्मित्वप्रत्ययः ४ अन्तर्यामी ५ सच्चिदानन्दाः ६ आकाशादिभिः

जडेष्वपीच्छयाधर्मास्तिरोभाव्याखिलान्निजान् ।केचित्कचित्कचित्केचिच्छेपिताभेदसिद्धये
प्ररोहो मार्दवं किंचिद्वृक्षे काठिन्यमश्मसु ॥ अप्ररोहश्चेति भेदो सज्जातेष्वपि गम्यते ॥२१॥
अनुष्णाशीतलस्पर्शो भूवाय्वोरप्सु शीतलः॥स तेजस्युष्ण एवेति धर्माणामप्यनेकता॥२२॥
चिदाद्यभावतो रूपे बह्वाकारप्रकारतः ॥ परस्परं विभिन्नानां धर्माणामपि दर्शनात् ॥२३॥
सज्ञानानां च जीवानां मायया मोहनादृढम् ॥ महान्प्रदृश्यते भेदो ब्रह्मत्वं नैव लक्ष्यते ॥२४॥
वस्तुतस्त्वखिलं ब्रह्म त्रिकालेषु तथा स्मृतिः ॥ वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ २५
( स्कन्ध ८ ) त्वय्यग्रआसीत्त्वयि मध्यआसीत्त्वय्यन्तआसीदिदमात्मतन्त्रे ॥
त्वमादिरन्तो जगतोऽस्य मध्यं घटस्य मृत्सेव परः परस्मात् ॥२६॥
भूतानि विष्णुर्भुवनानि विष्णुः ॥ इति भागवते विष्णुपुराणेऽन्यत्र चोदितम् ॥
तस्मादभिन्नमेवास्ति कारणाद्ब्रह्मणो जगत् ॥२७॥
आविर्भावे चिदादीनां धर्माणामपि सर्वशः ॥ ब्रह्मैवैकं तदा पूर्णं सर्वं स्यादेव केवलम् ॥ २८
दृश्येताकारतो भेदो मुद्रिकाकटकादिषु ॥ आदिमध्यावसानेषु स्वर्णमेवेति निश्चयः ॥ २९॥
जीवानां ब्रह्मविज्ञानादानन्दांशप्रकाशनात् ॥ सर्वत्र लीलया तादृग्ब्रह्मैवैकं प्रतीयते ॥३०॥

नानात्वमेच्छिकं मध्येऽचिन्त्यत्वाद्दृश्यते महत् ।तमोनाशे शुद्धदृष्टेर्नेह नानास्ति किंचन।३१
ब्रह्मरूपः सदा सत्यः प्रपञ्चस्तत्कृतोऽखिलः॥निरूप्यते हि वेदादौ शुद्धाद्वैतमतो मतम्।३२
सत्यस्वरूपमेतत्स्वस्मादाविष्कृतं स्वयं येन॥ कर्तारं भर्तारं हर्तारं भज सदा ललितलीलम्।

इति श्रीमद्वल्लभाचार्य्यमतवर्तिश्रीव्रजवल्लभचरणानुचरपञ्चनदीघनश्यामभट्टात्मजगोवर्द्धनशीघ्रकवि-विरचिते वेदान्तचिन्तामणौ संक्षेपतस्त्रिविधकार्यनिरूपणं नाम तृतीयं प्रकरणम् ॥ ३ ॥ ॥ ॥

## अथ चतुर्थं प्रकरणम्

भगवत्समवायित्वात्ताद्रूप्यात्सत्य एव हि ॥ प्रपञ्चो यादृशं स्वर्णं तादृक्तस्यादेव कुण्डलम्॥१
तन्तुकार्यं पटस्तन्त्वात्मकः स्युस्तन्तवो यथा॥सूक्ष्माः सिताश्च वस्त्रेऽपि तत्तादृक्षत्वमीक्ष्यते॥
ऐतदात्म्यमिदं सर्वं तत्सत्यमिति पठ्यते ॥ यदिदं किं च तत्सत्यमित्याचक्षत इत्यपि॥ ३॥
सर्वशब्देन निर्दिश्य दृष्टं श्रुतमदोऽखिलम् ॥ एतस्य ब्रह्मरूपत्वं सत्यत्वं च निरूप्यते ॥४॥
कालत्रयेऽप्यबाध्यं यत्सत्यमित्युच्यते बुधैः॥त्वय्यग्रआसीत्पद्येऽपि सदा सत्ताभिधीयते ॥
तस्मात्सनातनमिदमखण्डं वर्तते सदा ॥ मध्ये कार्य्यात्मना पूर्वोत्तरयोः कारणात्मना ॥६॥

१ छान्दोग्ये श्वेतकेतुविद्यायाम् २ तैत्तिरीयब्रह्मवल्ल्याम्

विश्वं हि ब्रह्म तन्मात्रं संस्थितं विष्णुमायया॥ यथेदानीं तथा चाग्रे पश्चादप्येतदीदृशम् ॥७
उक्तं तृतीयस्कन्धेऽथ सूत्रकर्त्रा श्रुतेर्बलात्।कारणानन्यतामस्योक्त्वा सत्यत्वं प्रपञ्चितम्।
( अ० २ पा० १ सू० १४ ) तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १५ ॥
भावे चोपलब्धेः ॥ १६ ॥ सत्त्वाच्चावरस्य ॥ १७ ॥
असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ १८ ॥
युक्तेः शब्दान्तराच्च ॥ १९ ॥ पटवच्च ॥ ब्रह्मानन्योऽस्ति सत्योऽयं भावे सदुपलभ्यते ॥
अवरस्य प्रपञ्चस्य सत्त्वमुक्तश्रुतौ श्रुतम् ॥९ ॥
असद्वा इदमित्येतदव्याकृतिपरं मतम् ॥ तदात्मानं स्वयमिति वाक्यशेषस्य संगतेः ॥१०॥
समवेतं भवेत्कार्यं युक्तिर्बीजद्रुमादिवत् ॥वाक्यान्तराणि सत्यत्वबोधकानि बहूनि हि॥११॥
पटोऽनुभूयते सर्वो विस्तीर्णो नानुभूयते ॥ संकोचेऽल्पतया तद्वत्सृष्टिप्रलययोर्जगत् ॥१२
व्याख्यातमित्थं भाष्ये सत्कार्यवादो विविच्यते ॥ एवं सर्वत्र वेदादौ युक्तिभिश्चानुभूयते ॥
आविर्भावतिरोभावाभ्यां नैवास्ति ह्यनित्यता ॥ आविर्भावे प्रतीयेत तिरोभावे तु नेच्छया ॥
आविष्कृतानि भूतेभ्यः शरीराणीच्छया स्वयम्॥ईश्वरो जीवयुक्तानि निमित्तीकृत्य केवलम्

भूतेभ्य आविष्कुरुते तादृशानीतराण्यपि ॥ तानि कर्मानुसारेण जीवान्प्रापयति प्रभुः ॥ १६ ॥
देहाः सन्त्येव भूतेषु भागैः कारणरूपतः ॥ मध्ये कार्य्यात्मना भिन्ना लीयन्तेऽन्ते च कारणे ॥
जीवस्तु नित्य एवास्ति योगो भगवदिच्छया ॥ आविर्भावतिरोभावशालि नित्यमतोऽखिलम्
व्यासेन भारते योधा ये हतास्ते प्रदर्शिताः ॥ इति नित्यं तिरोभावेऽपीच्छया दृश्यते क्वचित् ॥
केचिदाहुर्जगन्मिथ्या भ्रमाद्ब्रह्मणि दृश्यते ॥ यथेह रजतं शुक्तौ यथा रज्जौ भुजङ्गमः ॥ २०
ब्रह्मादृश्यं सर्वथैव निराकारं मते च ते ॥ साकारे दृश्य एव स्यादाश्रये निश्चितं भ्रमः ॥ २१ ॥
न धूल्याच्छन्नशुक्तौ वा वायौ वा भ्रान्तिरिष्यते । किं च साधर्म्यमूलोऽयं शुक्तौ यच्चाकचक्यतः
किं नान्यथा गजभ्रान्तिर्मायिकं सगुणं जगत् । निर्धर्मकं विमायं तत्साम्यगन्धोऽपि नानयोः ॥
हट्टादौ रजतं सत्यं वल्मीकादौ च पन्नगः ॥ दृश्यते तज्जसंस्कारात्कल्पये द्वीर्दृपाश्रये ॥ २४ ॥
तथा भिन्नमतः सत्यं दृष्टं चेदीदृशं क्वचित् ॥ तदा कल्प्येत संस्काराद्दृश्यते श्रूयते न तत् । २५ ॥
नन्वसत्यो यथा स्वप्ने[1] गृहवित्तादि लभ्यते ॥ मिथ्या तत्र न निद्रान्ते तदसत्यमिदं तदा ॥ २६
इति चेन्न तदोद्भूतैः पापैः पुण्यैर्न वै भवेत् ॥ दुःखं सुखं वा तत्सर्वं जगज्जाभ्यां तु जायते ॥ २७ ॥

---

१ स्वप्ने २ स्वाभिकवस्तु

दृष्टं जाग्रदवस्थायां यद्यद्घटपटादिकम्॥संस्कारात्कल्प्यते तत्तन्मोहनान्मायया मतेः॥२८॥
अस्य जाग्रदवस्था तु मोक्षस्तत्र न किंचन ॥ कथं सत्यं तदा दृष्टान्नासत्यं परिकल्पितम् ॥
नन्वदृष्टमपि स्वप्ने दृश्यते शृङ्गवाञ्छशः॥चलन्वृक्षो गजः पीत इत्याद्यत्राखिलं तथा॥ ३० ॥
इति चेन्न शशो वृक्षो हस्ती शृङ्गगतिक्रिया॥ पीतवर्ण इमे दृष्टा योगमात्रं तु कल्प्यते ॥ ३१॥
गृहं सत्यं स्वयं सत्यो योगो ममतया मुधा॥जीवःसत्यस्तनुः सत्याऽहंता राजत्ववृथा[1] ॥३२
सिद्धान्त इति चेत्तर्हि दृष्टान्त उपपद्यते॥पुराणेष्वप्येतदर्थं स्वप्नाभत्वं क्वचित्कृतम् ॥ ३३॥
अतःसूत्रेषु वैधर्म्याच्च न स्वप्नादिवत्त्वतः ॥ निषिध्यतेऽधिकरणादसत्यत्वं तु वस्तुतः ॥३४॥
स्वप्ने भुक्त्यम्बुपानाभ्यां क्षुत्तृण्णैव निवर्त्तते ॥ तदा देहकृतैर्बन्धात्कथं मुच्येत साधनैः ॥ ३५
तस्मादसत्यं नैवेदं तादृूप्यान्नित्यमेव हि॥श्रुतिष्वनेकत्र सत्यत्वमुक्तं नान्यथा क्वचित् ॥३६
( द्वादशस्कन्धे ) एतत्केचिदविद्वांसो मायासंसृतिमात्मनः ॥
अनाद्यावर्त्तितं नृणां कादाचित्कं प्रचक्षते॥३७॥
असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ॥ इत्यासुरेषु गणिता असत्यत्वप्रवादिनः ॥ ३८ ॥

१ विप्रादेःस्वप्ने राजैवाहमिति प्रतीतिवत्

दृढाहन्तापदं देहं गेहादि ममतास्पदम् ॥ यदा सत्यं विजानीयान्न विरज्येत कश्चन ॥३९
वैराग्यार्थमसत्यत्वं पुराणेषु क्वचित्क्वचित् ॥ अभिप्रेत्य तिरोभावं कुत्रचित्संसृतिं तथा ॥४०
क्रीडामये प्रभोरस्मिन्संयोगविगमास्पदे॥ तिरोभाविनि नो रागः कर्त्तव्यः क्षणिके वृथा॥४१

शेषेणाप्यस्य नित्यत्वं निश्चितं पस्पशाह्निके ॥
नित्यः कार्योऽथवा शब्द इत्याकारविचारणे ॥ ४२ ॥

सिद्धे शब्दार्थसम्बन्ध इत्येतत्तु विवृण्वता॥शब्दश्चार्थश्च सम्बन्धस्त्रयो नित्या निरूपिताः
एवं सर्वत्र शास्त्रेषु नित्यमेव निरूपितम् ॥ आविर्भावतिरोभावाभ्यां मिथ्या भात्यनित्यता॥
असच्छास्त्रेष्वनित्यत्वं न्यायादिषु विविच्यते॥सनास्तिकयेषु मोहाय मुनिभिर्निर्मितेष्विह ॥
उत्तरोत्तरसर्गार्थं मोहनाय मनीषिणाम् ॥ रुद्रादिदैवतैः कैश्चिन्मतेषु रचितेषु च ॥ ४६ ॥
तादृक्छास्त्राभ्यसनतो भ्रान्तचित्ताः स्वकर्मभिः॥ अप्राप्ततत्त्वा जायन्ते म्रियन्ते च मुहुर्मुहुः ॥
( मार्कण्डेये अ०८१ ) ज्ञानिनामपि चेतांसि देवी भगवती हि सा ॥
बलादाकृष्य मोहाय महामाया प्रयच्छति ॥ ४८॥

केचिदेव तु वेदार्थं प्रसादात्सद्गुरोर्हरेः॥ विनिश्चित्य भजन्तस्तं मुच्यन्ते प्राप्नुवन्त्यपि॥४९

नित्यं स्वरूपमखिलमाविर्भाव्य स्वयं तिरोभाव्य ॥
रममाणमविहतेच्छं हृत्पदके हीरकं विरचयाच्छम् ॥५०॥

इति श्रीमद्वल्लभाचार्यमतवर्तिश्रीमिजवल्लभचरणानुचरणञ्चनदीघनश्यामभट्टात्मजगोवर्द्धनशीघ्रकविविरचिते वेदान्तचिन्तामणौ प्रपञ्चसत्यत्वनिरूपणं नाम तुर्यं प्रकरणम् ॥ ४ ॥ ॥ ७ ॥

## अथ पञ्चमं प्रकरणम्

ननूत्पत्तिर्घटस्यास्ति ध्वंसोऽप्यस्य विलोक्यते॥कथं वाच्या प्रपञ्चान्तःपातिनस्तस्य नित्यता
अनन्तं सत्यनादित्वे नित्यमित्युच्यते कथम्॥नश्वरं नित्यमिति चेद्यथैतत्कथ्यते तथा॥२
घटे नष्टे तु किं नष्टं नाकारोऽन्यत्र[1] दृश्यते ॥ न मृत्तिका प्रस्थमिता चेत्तावत्येव लभ्यते ॥३
न नष्टा घटसंज्ञापि शब्दानां नित्यता यतः॥सृष्ट्यारम्भादनेके स्युर्घटास्तास्ते सा तु विद्यते॥४
किन्त्वाकारमृदोर्योऽभूत्संज्ञाया वाचकत्वतः॥ तत्राकारतिरोधाने संयोगः स न वर्तते ॥५
सर्वाकारो हरिः पूर्ण एकैकाकारतः पृथक् ॥ बहुत्वमिच्छन्रूपाणि चकार द्विविधान्यपि[2]॥६॥
सर्ववर्णानुपूर्वीकैः शब्दैर्वाच्योऽर्थतः स्वयम्॥व्यवहाराय नामान्यप्येकैकस्येच्छया व्यधात्॥

१ घटान्तरेषु २ चराचराणि.

सर्वांणि रूपाणि विचित्य धीरः नामानि कृत्वाभिवदन्यदास्ते ॥
तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत ॥ ॥

नामरूपे व्याकरवाणीत्याद्याः श्रुतयोऽवदन्॥तन्निवृत्तौ बृहदारण्ये छान्दोग्येऽन्यत्र च क्रमात्
कम्बुग्रीवादिमांस्तेष्वाकारो यो नियतः पुरा॥योगस्तावन्मृदस्तस्य चोत्पत्तिरिति कथ्यते॥९
अयमर्थः पदादस्माद्बोध्य इत्थं स्वनामसु ॥ स्वीयेष्वेकैकरूपेषु संकेतो यः पुरा कृतः॥१०॥
तस्मात्परम्परामासास्तथा व्यवहृतेस्तयोः॥ योगं घटेत्यानुपूर्वी वक्ति वाच्यतया तदा ॥११
व्यवहारा भवन्त्यस्मात्ते जलानयनादयः॥ य आकारानुसाराद्वा सृष्ट्वा नियमिताः पुरा॥१२
अनन्तरं तथेच्छातो निमित्तीकृत्य किंचन ॥ तिरोभाव्यत आकारः क्रियते मृल्लयो मृदि ॥१३
घटशब्दस्य वाच्यस्तु दृश्यो योगो वियोगतः॥ तन्नामवृत्तेः संज्ञाया नष्टो घट इतीरणा॥१४
पृथूदरत्वाद्याकारः समग्रस्तु तिरोहितः ॥ भिन्नभिन्ना य आकारा दृश्यन्तेऽवयवेषु ते ॥
पूर्वाकारांशभूता हि घटस्य शकला इव ॥ तेषामपि तिरोधानं यदाणुत्वं भवेत्तदा ॥ १६ ॥
वस्तुनो विद्यमानस्य जीवानुभवयोग्यता ॥आविर्भावस्तिरोभावोऽतोऽन्यथेति हि लक्षणम्॥
आविर्भावतिरोभावावुत्पत्तिर्नाश इत्यपि ॥ शास्त्रविद्भिर्विकल्प्येते विदुर्ब्रह्मविदस्तु तौ॥१८॥

तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् ॥ आविर्भावतिरोभावजन्मनाशविकल्पवत् ॥१९॥
(अध्याय २२ श्लो० ५९) इति विष्णुपुराणेऽपि प्रथमांशे निरूपितम् ॥
उक्तं भागवतेऽप्येतद्दशमे हरिणा स्वयम्॥२०॥
खं वायुर्ज्योतिरापोभूस्तत्कृतेषु यथाशयम्॥आविस्तिरोऽल्पो भूर्येको नानात्वं यात्यसावपि॥
छान्दोग्ये तस्यैवं विजानत एवं मन्वानस्येत्युपक्रम्य ॥
आविर्भावतिरोभावावात्मनोऽन्नमात्मन इति श्रूयते ॥२२॥
स्पष्टं श्रुत्यन्तरे केनबृहदारण्यकादिमे ॥ मार्कण्डेयपुराणेऽपि तुर्येऽध्याये निरूप्यते ॥२३॥
(श्लो० ३९) आविर्भावतिरोभावदृष्टादृष्टविलक्षणम् ॥वदन्ति यत्सृष्टमिदं तथैवान्ते च संहृतम्
पुराणे ब्रह्मवैवर्ते खण्डे श्रीकृष्णजन्मनः ॥ एकविंशे तथाध्याये नन्दादीन्कृष्ण आह तत् ॥
( श्लो० ९ ) स्थाने स्थाने पृथिव्यां च कालेकाले यथोचितम् ॥
ईशेच्छयाविर्भूतं हि न भवेत्प्रतिबन्धकम् ॥ २६ ॥
तथा ( श्लो० १२१ ) ब्रह्माण्डं वा कतिविधमाविर्भूतं तिरोहितम् ॥
विधेया वा कतिविधास्तस्य भ्रूभङ्गलीलया ॥२७॥

देहोऽपि पञ्चभूतेभ्य आविर्भूतस्तदिच्छया ॥ योगोऽत्र योग्यभागानां तेषां तत्तादृगाकृतेः ॥
कर्मानुसारतो जीवस्तावत्कालं भुनक्ति तम् ॥ व्यवहारास्तदा तस्मिन्स्युर्मनुष्यगवादयः ॥
परतन्त्रः स तां त्यक्त्वा यदा देहान्तरं व्रजेत् ॥ वियुज्यन्ते दह्यमाने देहे तान्याकृतिस्तथा ॥
आकारस्तु तिरोधत्ते तेजो लीयेत तेजसि ॥
श्वासादिरूपो यो वायुः सोऽवशिष्टस्तु तं विशेत् ॥३१॥
आकारवद्ध आकाशस्तत्तिरोधानतो गतः ॥ जलं तेजसि भूमौ वा भूमिर्भस्मादिरूपतः ॥३२॥
वियुक्तान्यपि विद्यन्ते संज्ञाया अप्रवृत्तितः ॥ संयोगस्याभिधेयत्वान्नष्टोऽसाविति गद्यते ॥
मुक्ताभिर्ग्रथ्यते मध्ये निधाय पदकान्यपि ॥ गुणैस्तेषां स संयोगो हार इत्यभिधीयते ॥३४
मुक्तादीनांवियोगे न हारसंज्ञा प्रवर्त्तते ॥ संयोगविगमावेव तो नैकस्यापि हि क्षयः ॥३५॥
यथा क्रीडोपस्कराणां संयोगविगमाविह ॥ इच्छया क्रीडितुः स्यातां तथैवेशेच्छया नृणाम् ॥
इत्युक्तं प्रथमे स्कन्धे तृतीयेऽपि विवेचितम् ॥ तन्निरोधोऽस्य शयनमाविर्भावस्तु संभवः ॥३७
कार्यं कारणरूपेण तिरोभावे तु विद्यते ॥ आविर्भावे तु तद्रूपं तदिच्छातो विभिद्यते ॥३८
स एव प्रोयते हारः पुनः प्रोतुं यदीष्यते ॥ आविष्कुर्यात्तमेवैवं देहमिच्छेद्यदीश्वरः ॥३९॥

मुद्रिकानिष्ठमाणिक्यं कुण्डले जटितं यथा ॥ परंवानीशितुर्जीवस्तनूं याति तथेतराम् ॥ ४० ॥

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ॥
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥४१॥

मुद्रिकायामिन्द्रमणिस्तस्यां जह्यत इच्छया॥ परकायप्रवेशादौ जीवस्यावस्थितिस्तथा॥४२
तस्यां तदेव माणिक्यं शक्यते जटितुं पुनः ॥ तथाविर्भाव्य तानेव क्वचिद्दर्शयति प्रभुः ॥४३॥
भारते दर्शिताः सर्वे प्रादुर्भाव्य त एव हि ॥ व्यासद्वारा तु तत्स्पष्टं पर्वण्याश्रमवासिके ॥४४॥
सर्वे भवन्तो गच्छन्तु नदीं भागीरथीं प्रति॥ ततो द्रक्ष्यथ सर्वांस्तान्ये हताः स्म रणाजिरे॥
ततः सर्वे सदारास्तत्र गत्वावगाह्य रात्रौ व्यासाश्रमं जग्मुः ॥
ततो व्यासो महातेजाः पुण्यं भागीरथीजलम् ॥ अवगाह्याजुहावाथ सर्वांल्लोकान्महामुनिः॥
पाण्डवानां च ये योधाः कौरवाणां च सर्वशः॥ राजानश्च महाभागा नानादेशनिवासिनः ॥
ततः सुतुमुलः शब्दो जलान्ते जनमेजय ॥ प्रादुरासीद्यथा पूर्वं कुरुपाण्डवसेनयोः ॥४८
ततस्ते पाण्डवाः सर्वे भीष्मद्रोणपुरोगमाः ॥ससैन्याः सलिलात्तस्मात्समुत्तस्थुः सहस्रशः॥

१ परतन्त्रः

इत्यादिना प्रत्येकं नाम्ना निरूप्योवाच ॥ एकां रात्रिं विहृत्यैवं ते वीरास्ताश्च योषितः॥

आमन्त्र्यान्योऽन्यमाश्लिष्य ततो जग्मुर्यथागतम् ॥ ५० ॥

एतदाकर्ण्य जनमेजयोऽन्वयुङ्क्त ॥ कथं च त्यक्तदेहानां पुनस्तद्रूपदर्शनमिति ॥

तदानीं वैशम्पायन उवाच ॥ अविप्रणाशः सर्वेषां कर्मणामिति निश्चयः ॥ ५१ ॥

कर्मजानि शरीराणि तथैवाकृतयो नृप॥ महाभूतानि नित्यानि भूताधिपतिसंश्रयात् ॥५२॥

॥ इत्यादि ॥ एतदग्रे ॥ अविनाशी तथा नित्यः क्षेत्रज्ञ इति निश्चयः ॥

भूतानामात्मभावो यो ध्रुवोऽसौ संभजानताम् ॥ ५३ ॥

इत्यादि भारते प्रोक्तमन्यत्रापि स्फुटं त्विदम्॥संगृहीतमिदं विद्वन्मण्डने प्रभुभिः स्वयम् ॥

संयोगविगमौ तस्माद्देहादेर्भाष्यकृत्ततः ॥ व्यभारकचिच्च सदसत्प्रपञ्चे गणनामपि ॥ ५५ ॥

क्रीडार्थमाविर्भवति नानारूपैर्निजेच्छया॥सर्वधर्मा तिरोधत्ते शक्तिमान्भगवान्स्वयम् ॥५६

आविर्भावतिरोभावौ शक्ती वै मुरवैरिणः॥ इत्याचार्यैः संगृहीताद्वचनाच्छक्तिता तयोः ॥

परास्य शक्तिर्विविधैव श्रूयत इति श्रुतिः॥ यः सर्वज्ञः सर्वशक्तिरिति सर्वास्त्विमावपि ॥५८

आविर्भावयतीत्येका तिरोभावयतीतरा ॥ तत्कार्यमाविर्भवनं तिरोभवनमप्यथ ॥ ५९ ॥

यद्रूपकर्मकमयमाविर्भवनमिच्छति ॥ तथाविर्भावयति तत्तिरोभावेऽप्ययं क्रमः ॥ ६० ॥
नित्ये ते भगवच्छक्ती न कार्यं युगपत्तयोः॥सर्वात्मा शक्तिमान्किं तु यद्यत्कर्मकमिच्छति।
गमनादानशक्ती तु वर्तेते चरणे करे ॥ देहीच्छया तयोः कार्यं तदभावे प्रसुप्तता ॥६२॥
ब्रह्मनिष्ठमिदं सर्वं तस्याविर्भवतीच्छया ॥ जातउत्पन्नइत्याद्या तस्मिन्व्यवहृतिस्तदा ॥६३
आविर्भावो हि जननं प्रादुर्भावे जनिर्यतः ॥ उत्पूर्वो वा पद गतौ धातुरुत्पत्तिरुद्गमः ॥ ६४ ॥
न दृश्यते तिरोभूतं वस्तु ब्रह्मणि तन्मयम् ॥ यथा जवनिकाच्छन्नं पटादि न विलक्ष्यते ॥६५॥
नाशमाप्तो नाशमाप्त इति व्यवहृतिस्तदा ॥ वस्तुतोऽदर्शनं नाशो नशधातुरदर्शने ॥ ६६॥
चेतने व्यवहारस्तु मृत इत्यपि जायते ॥ प्राणत्यागे हि मृङ्माणः संघातस्थो वियुज्यते॥६७॥
जीवोपाधिः स संघातो जीवेन सह गच्छति॥ जीवदेहवियोगोऽतो मृतिरित्यभिधीयते॥६८॥
तौ धात्वर्थविचारे तु व्यवहारेऽपि सिद्ध्यतः ॥ नाशोत्पत्तिविकल्पस्त्वपरिनिष्ठधियामयम्॥

नाशोत्पत्तिविदां शोकोऽप्यानित्यत्वधिया भवेत् ॥
नित्यत्वज्ञा ब्रह्मनिष्ठा न विमुह्यन्ति कर्हिचित् ॥७० ॥

१ लिङ्गशरीरम्.

नित्यत्वं वोधितं स्पष्टं गीतासु हरिणा स्वयम्॥अज्ञानस्य विनाशाय ततो नष्टार्जुनस्य शुक् ॥
न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ॥ न चैव न भविष्यामः सर्वे वयमतः परम् ॥७२॥
दृश्यमानप्रपञ्चस्य मिथ्यात्वं सुप्रमाणतः ॥ महतैव प्रपञ्चेन भाष्यकारो निरस्तवान् ॥ ७३ ॥
विस्तृतं रूपमनयोराचार्यचरणादिभिः ॥ वालवोधोपयोग्येव संक्षेपेणेह वर्णितम् ॥ ७४ ॥

तस्मात्क्रीडास्पदं विश्वं नित्यं भगवदात्मकम् ॥
आविर्भावतिरोभावशालि वेदादिपूदितम् ॥ ७५ ॥

तद्ध्यानमानसः स्या एकोऽप्यविकार एव यो भवति॥
रमणेच्छयाबहुविधः कुर्वेश्वर्या महाश्चर्याम् ॥ ७६ ॥

इति श्रीमद्वल्लभाचार्यमतवर्तिश्रीव्रजवल्लभचरणानुचरपञ्चनदीघनश्याममट्टात्मजगोवर्द्धनशीघ्रकवि-
विरचिते वेदान्तचिन्तामणावाविर्भावतिरोभावनाम पञ्चमं प्रकरणम् ॥ ५ ॥

## अथ षष्ठं प्रकरणम्

य आविर्भावयत्यत्ति वाह्यान्तररतीच्छया ॥ समवाय्यप्याविकृतस्तस्मै भगवते नमः ॥१॥

सर्वत्र वादत्रितयं तदत्र सविस्तरं शास्त्रगणैर्वर्णि ॥
आरम्भवादोऽथ विर्वर्त्तवादस्तथा तृतीयः परिणामवादः॥२॥

तत्र नित्यं विभु नभो वाय्वादीनां विविच्यते॥ चतुर्णां यत्र परमाणुरूपाणां तु नित्यता॥३॥
कार्यरूपाण्यनित्यानि तेषामारम्भतोऽभवन् ॥ ईश्वरस्तु निमित्तं वा ब्रह्मभिन्नमिदं जगत् ॥४
न तदंशो विभुर्जीवः कालो द्रव्यान्तरं च सः॥ इत्यादिरूप आरम्भवादस्तार्किकसंमतः॥५॥
तदद्वैतश्रुतिशतैः खण्डितं मोहनात्मकम् ॥ आचार्यैः प्राक्तनैरत्र न विस्तरमियोच्यते ॥६॥
असत्यं कल्पितं विश्वं भ्रान्त्या रज्जुभुजङ्गवत्॥ स शाङ्कराणां विवर्त्तवादःप्रागिह दूपितः ॥७
प्राचीनाचार्यचरणवह्निवाग्वार्धिवर्द्धिते ॥ खण्डितो बहुधा शुद्धाद्वैतचन्द्रोदये मया ॥८॥
सर्वं कार्यात्मना यत्र कारणं मृद्घटादिवत् ॥ नाना परिणमत्येप परिणामः प्रकीर्तितः॥९॥
विकृताविकृतत्वाभ्यां परिणामो द्विधा मतः॥ विकृतं सत्परिणमेत्कारणं कार्यरूपतः॥१०॥
न पुनः कारणात्मत्वं विकृतः सोऽभिधीयते॥दुग्धाद्दधि यथा जातं पुनर्दुग्धं न जायते॥११
कार्यात्मना परिणमेत्कारणं स्वविकारि सत् ॥पुनः कारणरूपत्वमेपोऽविकृत उच्यते॥१२॥

१ भ्रमवादः विवर्तो भ्रमः विरुद्धं वर्तनम् तदभाववति तत्प्रकारकज्ञानमिति यावत्.

नानाभूपादिरूपेण रजतं परिणामि हि ॥ मध्ये तदेव चान्तेऽपि तत्पुनः स्याद्विलापने ॥१३
असौ वेदान्तसिद्धान्तः शुद्धान्तःकरणप्रियः ॥ परिणामो ह्यविकृतः साक्षाच्छ्रुत्यादिसंमतः॥
तदात्मानं स्वयमकुरुतेति परिणामिता॥अतः सूत्रेऽप्यात्मकृतेः परिणामादितीरणा॥१५॥
सुवर्णमविकार्यैव नाना परिणमत्यदः॥ शिष्यते स्वयमेवान्ते मध्ये व्यवहृतिः परा ॥१६॥
सर्वाकारैर्ब्रह्म तथैवैकं परिणमत्यतः ॥ विकारो निर्विकारस्य कथंचिन्नैव जायते ॥ १७॥
यथा सुवर्णं सुकृतं पुरस्तात्पश्चाच्च सर्वस्य हिरण्मयस्य ॥
मध्ये तदेव व्यवहार्यमाणं नानापदेशैरहमस्य तद्वत् ॥ १८॥
इत्थं भगवता स्वस्याविकारित्वं समन्वये॥उक्तं सदृष्टान्तमिदमन्यत्रापि बहु स्फुटम्॥१९॥
उभयव्यपदेशात्त्वहिकुण्डलवदित्यतः॥व्यासोऽधिकरणं प्राहाविकाराय समन्वये ॥ २० ॥
स निर्गुणोऽनन्तगुणः परिणाम्यविकारवान् ॥ विरुद्धमित्याद्युभयं वेदे यद्व्यपदिश्यते ॥२१॥
तस्माद्ब्रह्माखिलाकारं सरलाकृतिरप्यहिः॥स्वेच्छया कुण्डलाकारोऽविकार्येव प्रजायते॥२२
तैजसानां तु सर्वेषां भाष्येऽभाष्याविकारिता॥दृष्टान्ता बहवः स्पष्टाः सुबोधिन्यादिपूदिताः॥
चिन्तामणेः कल्पतरोः कामधेनोः समुत्थिताः॥पदार्थाः परिदृश्यन्ते विक्रियन्ते न ते क्वचित् ॥

विकृतः परिणामस्तु न स ब्रह्मणि युज्यते ॥ वेदाद्यनुपदोक्तस्याविकारित्वस्य बाधनात् ॥
(स्कन्ध १०) तथापि भूमन्महिमागुणस्य ते विबोद्धुमर्हत्यमलान्तरात्मभिः ॥
अविक्रियात्स्वानुभवादरूपतो ह्यनन्यबोध्यात्मतया न चान्यथा॥२६॥
ह्म ज्योतिर्निर्गुणं निर्विकारमितिचान्तिमे ॥ अनेकत्रापि गीतायामविक्रियमुदीर्यते ॥२७॥
प्रलयः किं च सर्वेषां न स्यात्तत्र तथा सति॥कार्याणां कारणात्मत्वासंभवाद्विकृतौ पुनः॥२८
तज्जलान्यत्प्रयन्तीत्यादिश्रुतौ स तु रूपितः ॥ स्वस्मिन्विलापिते विश्वे ब्रह्मैकमवशिष्यते ॥
(स्कन्ध १०) नष्टे लोके द्विपरार्द्धावसाने महाभूतेष्वादिभूतं गतेषु ॥
व्यक्तेऽव्यक्तं कालवेगेन याते भवानेकः शिष्यते शेषसंज्ञः॥३०॥
क्रीडार्थमाविष्कृतवान्बहुत्वेच्छुः स्वरूपतः ॥ ऊर्णनाभिर्यथा तन्तूंस्तैर्गेहमविकारवान् ॥
आविर्भावे रतीच्छैव हेतुः श्रुत्यादिसंमतः ॥ यथा काण्वश्रुतौ पूर्वं रमणाभाव उच्यते ॥
स वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत् सहैतावानास ॥
एकाकिनो रत्यभावाद्द्वितीयेच्छाविभोरभूत् ॥ वस्तुतो न द्वितीयं तु शुद्धाद्वैतस्य वर्तते ॥३३

१ भागवताख्ये तुर्यप्रमाणे २ काण्वशाखीयोपनिषदि बृहदारण्यके पुरुषविधब्राह्मणे.

इति स स्वयमेवास रूपनामविभेदतः ॥ अनेकधाथ वैचित्र्यं तत्तद्धर्मतिरोभवात् ॥ ३४ ॥
सर्वधर्मतिरोधानात्तद्धर्मस्यैव दर्शनम् ॥ अन्यत्रान्यस्य धर्मस्य चेति भेदो महानिह ॥ ३५ ॥
एवंविधप्रपञ्चेन स्वात्मना क्रीडति प्रभुः ॥ क्रीडार्थमात्मन इदं त्रिजगत्ते कृतं यतः ॥ ३६ ॥
क्रीडाभाण्डमिदं विश्वमित्यादिष्विदमुच्यते॥ ऊर्णनाभिर्हि रमते तन्तुभिर्गेहतोऽथवा॥३७॥
सर्वशक्तेस्तथेच्छातो मूढैर्नानेव दृश्यते ॥ ब्रह्मैवैकमिदं सर्वं वस्तुतस्तु विचारणे ॥ ३८ ॥
यत्र येन यतो यस्य यस्मै यद्यद्यथा यदा ॥ स्यादिदं भगवान्साक्षात्प्रधानपुरुषेश्वरः ॥ ३९ ॥
इत्यादिना भागवतेऽखिलस्य ब्रह्मता मता॥एवं चात्माकार्त्स्न्यमितिसूत्रेऽप्येतन्निरूप्यते ४०
कटकं मुद्रिकां हेम्नः कुण्डलं खण्डकानपि ॥ हेमत्वेनैव गृह्णाति यथा बुद्धिस्तदर्थिनः ॥४१॥
तथा ब्रह्मविदो बुद्धिर्यत्त्विद्भेददर्शनम्॥एकस्योक्तं भागवते तथा जानन्ति ते दृढम् ॥४२॥
(स्कं० १२ अ० ४ श्लो० ३०) यथा हिरण्यं बहुधा समीयते नृभिः क्रियाभिर्व्यवहारवर्त्मसु॥
एवं वचोभिर्भगवानधोऽक्षजो व्याख्यायते लौकिकवैदिकैर्जनैः ॥ ४३ ॥
एवं क्रीडन्प्रपञ्चात्मा यदान्ता रतिमिच्छति॥तदात्मनि विलाप्येदं रमते कारणे वशी ॥४४
सुखार्थं सर्वजीवानां करोति लयमात्मनि॥व्यधाद्यथेह क्षणदां सुख्यन्त्यात्मरतौ हि ते ॥

आहुर्वेदा हि यत्रैतत्पुरुषः स्वपितीत्यतः॥ चिति लीनास्तदा जीवा न विदन्ति तु किंचन॥
दुःखात्ययो यथा पुंसा सुषुप्तावनुभूयते॥ नानन्दानुभवस्तत्र स तु मोक्षे प्रवक्ष्यते ॥४७॥
अन्ने प्रलीयते मर्त्यं इत्याद्युक्तप्रकारतः॥ जडानां प्रलयस्तत्र सर्वेषां सर्वकारणे ॥४८॥
आनन्दांशान्तरात्मान आनन्दे चिति चेतनाः॥जडाः सदंशे वर्त्तन्ते विलीनाः सुप्तशक्तयः॥
उद्गच्छन्ति तदिच्छातः पुनस्ते तत्तदंशतः॥ तत्तदंशेषु लीयन्त ऊर्णनाभ्यास्यतन्तुवत्॥५०॥

यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति ॥
यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्संभवतीह विश्वम् ॥ ५१ ॥

मुण्डकोपनिषद्येतद्बृहदारण्यकादिषु॥श्रुतं भागवते चेदं स्कन्ध एकादशे स्फुटम् ॥५२॥
यथोर्णनाभिर्हृदयादूर्णां सन्तत्य वक्त्रतः॥तया विहृत्य भूयस्तां ग्रसत्येवमधीश्वरः॥५३
तस्मात्सर्वलयस्थानं सर्वाविर्भावकारणम्॥चित्ते स्थिरं परं ब्रह्मास्त्वचिन्त्यानन्तशक्तिमत्॥

यस्माज्जीवाः सांशा अणवोऽन्तर्यामिणो जडाश्चासन् ॥
साकारं श्रुतिसारं वारं वारं स्मराखिलाधारम् ॥ ५५ ॥

१ छान्दोग्ये.

इति श्रीमद्वल्लभाचार्यमतवर्तिश्रीव्रजवल्लभचरणानुचरपञ्चनदीघनश्यामभट्टात्मजगोवर्द्धनशीघ्रकवि-
विरचिते वेदान्तचिन्तामणावविकृतपरिणामनिरूपणं नाम षष्ठं प्रकरणम् ॥ ६ ॥ ॥ ७ ॥ ७ ॥

# अथ सप्तमं प्रकरणम्

अंशा जीवा यतो वह्नेर्विस्फुलिङ्गवदुद्गताः ॥ संसरन्ति च मुच्यन्ते नमोऽस्मै सर्वशक्तये ॥१॥
व्योमेव व्यापकं ब्रह्म सर्वत्रैकरसं सदा ॥ सच्चिदानन्दरूपं च पूर्णं निर्बाधमक्षयम् ॥ २॥
यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा॥ अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः॥ ३
सत्यं विज्ञानमानन्दं ब्रह्म पूर्णमदःश्रुतेः ॥ सर्वक्रियाभिः सर्वत्र नित्यैर्धर्मैस्तथाखिलैः ॥ ४ ॥
सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरोमुखम् ॥ सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ ५ ॥
मायया सर्वतः सांशं स्वशक्त्याचिन्त्यरूपधृत्॥ तस्याप्रतिहतेच्छस्य बहुत्वेच्छोदिताभवत्॥
सा बहु स्यां प्रजायेयेत्यादिश्रुत्यादिसंमता ॥ तदेच्छया प्रदेशे तदुद्गमार्थं तिरोदधे ॥ ७ ॥
सृष्टिकाले त एवान्ताः परिच्छेदा निरूपिताः॥ तथा हन्त तिरोसानीत्यादिवाक्यैर्निरूपितम्
काण्वाद्युपनिषत्स्वेतत्तथा स्मृतिपुराणयोः ॥ विभक्तिरप्रतर्क्यस्याविभक्तस्यापि युज्यते ॥
अविभक्तं विभक्तेषु विभक्तमिव च स्थितम्॥ चित्प्रधानाः परिछिन्ना अंशा व्युदचरंस्ततः॥

जीवाः क्षुद्रा विस्फुलिङ्गाः सुदीप्तात्पावकाद्यथा ॥
मुण्डकोपनिषत्स्वेष दृष्टान्तोऽन्यत्र चोदितः ॥११॥ द्वितीयमुण्डके (खण्ड १)
तदेतत्सत्यं यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः ॥
तथाक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति ॥ १२ ॥ छान्दोग्ये ॥
यथा सुदीप्तात्पावकात्क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवं तस्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे जीवाः सर्व एवात्मानो व्युच्चरन्ति रमणीयचरणाः[1] कुपूयचरणा[2] इति ॥ १३ ॥
सर्वेऽन्तर्यामिणो जाता आनन्दांशस्वरूपतः ॥ सदंशेन जडा[3] येभ्यः कृता देहा अनेकधा ॥
तिरोभावयदानन्दं[4] जीवे तं च चितं[5] जडे ॥ आनन्दांशतिरोधानान्निराकारावुभावपि ॥१५
चतुर्भुजादिर्न तयोस्तादृग्भगवदाकृतिः ॥ आनन्दरूपमेवास्य हस्तपादादिकं यतः ॥१६॥
प्रजायेय प्रकृष्टोऽहं जायेयेतीष्टवांस्तु यत् ॥ ऐश्वर्यादेः सविषयत्वाय धर्मास्तयाकरोत् ॥१७
षड्धर्मा भगशब्देनैश्वर्यं वीर्यं यशस्तथा ॥ श्रीर्ज्ञानं च विरागश्च नित्या भगवतोऽखिलाः ॥

१ पुण्यचरित्राः २ पापचरित्राः ३ पञ्चभूतप्रभृतयः ४ आनन्दांशम् ५ चिदंशम् ६ जडजीवौ ७ तिरोऽभावयत्.

विष्णुपुराणे ॥ ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ॥

ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा॥१९॥

ऐश्वर्यादितिरोभावाज्जीवानां दीनतादिकम् ॥ तिरोहितं ततो ह्यस्य सूत्रे बन्धविपर्ययौ ॥

बन्धश्चतुष्टयाभावाद्द्वयाभावाद्विपर्ययः॥पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ

अत्रत्ये श्रीमदाचार्यैर्भाष्ये तत्सुप्रपञ्चितम् ॥ २१ ॥

मायया निर्मिते विद्याविद्ये शक्ती प्रभोः स्वयम् ॥

जीवस्यैव ततो बन्धो मोक्षो नांशान्तरस्य सः ॥ २२ ॥

(स्कन्ध ११ अ० ११ श्लो० ३४) विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणाम् ॥

मोक्षबन्धकरी आद्ये मायया मे विनिर्मिते ॥२३॥

एकस्यैव ममांशस्य जीवस्यैव महामते ॥ बन्धोऽस्याविद्ययानादिर्विद्यया च तथेतरः ॥२४

सुखदुःखाद्यनुभवोऽपि जीवस्यैव केवलम् ॥ चिदभावाज्जडेऽन्तर्यामिण्यानन्दातिरोभवात् ॥

स्वरूपाज्ञानमेकं हि पर्व देहेन्द्रियासवः ॥ अन्तःकरणमेषां हि चतुर्द्धाध्यास उच्यते ॥२६॥

---

१ जातमितिशेषः २ ऐश्वर्यादिषट्कम् ३ ऐश्वर्यादिचतुष्कस्य ४ ज्ञानवैराग्ययोः

पञ्चपर्वा त्वविद्येयं यद्बद्धो याति संसृतिम् ॥ इत्यस्याः पञ्चपर्वाण्याचार्यपादा न्यरूपयन् ॥
अहंताममतारूपः संसारो यो मृषोदितः ॥ अविद्योपाधितो मिथ्या मृगतृष्णेव दृश्यते ॥२८
विपरीतक्रमेणोक्तमध्यासानां चतुष्टयम् ॥ एवं पर्वसु सिद्धेषु देहेऽहंभाव इष्यते ॥ २९ ॥
तत्संबन्धिनि गेहादौ ममतापि ततो मता ॥ स संसारो भ्रमः स्वप्नो मायेत्यादीह कथ्यते ॥
अविद्योपाधितो ह्येषोऽज्ञानात्मेह प्रतीयते ॥ कामलोपहिताक्षस्य शङ्खे पीतत्ववन्मृषा ॥३१
उपाधेः साधनैर्नाशे यथावस्थितमीक्ष्यते ॥ ब्रह्मत्वं क्रीडनार्थत्वं तथाऽविद्यानिवर्तने ॥३२॥

भागवते ॥ यथाम्भसा प्रचलता तरवोऽपि चला इव ॥
चक्षुषा भ्राम्यमाणेन दृश्यते चलतीव भूः ॥ ३३ ॥

देहादीनां विरागार्थं सदृष्टान्तमसत्यता ॥ संसारमेव तन्निष्ठमभिप्रेत्य कृता क्वचित् ॥३४॥
विप्रोऽपि मायया स्वप्ने राजाहमिति मन्यते ॥ तत्तद्देहगतो नैवं ब्रह्मांशत्वं स्मरत्यसौ ॥३५

(स्कन्ध १०) स्वप्ने यथा पश्यति देहमीदृशं मनोरथेनाभिनिविष्टचेतनः ॥
दृष्टश्रुताभ्यां मनसानुचिन्तयन्प्रपद्यते तत्किमपि ह्यपस्मृतिः ॥३६॥

१ रोगविशेषः

इत्यहम्भावमापन्नो देहे मिथ्यावियोगिनि॥ अवशःकार्यते सर्वमीश्वरेण विमूढधीः ॥ ३७ ॥
देहात्मभावो देहेनेशेच्छया कृतकर्मसु ॥ अहङ्कारविमूढात्मा कर्ताहमिति मन्यते ॥ ३८ ॥
वस्तुतस्त्वीश्वरेणेह तत्तद्धरेच्छयाऽखिलम् ॥ कार्य्यते क्रीडया तत्राहङ्कर्त्तेति मतिर्मृषा ॥ ३९
फलसाधनयोः भोक्तः कर्त्ता कारयिता हरिः ॥ अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते ॥ ४० ॥
भागवते।यथा दारुमयी योषा यथा यन्त्रमयो मृगः।एवं भूतानि भगवन्नीशतन्त्राणि विद्धि भो
यथा भ्रमरिका दृष्टया भ्राम्यतीव महीयते॥ चित्ते कर्त्तरि तत्रात्मा कर्त्तैवाहन्धिया स्थितः॥
उद्दिश्य संसृतिपदमहन्ताममते अपि ॥ सर्वत्र तन्निवृत्त्यैव मुक्तिर्नैवान्यथोच्यते ॥ ४३ ॥
(स्कन्ध ७) एतद्द्वारो हि संसारो गुणकर्म निबन्धनः ॥
अज्ञानमूलोऽपार्थोऽपि पुंसः स्वप्न इवेष्यते ॥४४॥
(स्कन्धः १२) नैतदधिगच्छन्ति विष्णोर्यत्परमं पदम् ॥
अहम्ममेति दौरात्म्यं न येषां देहगेहयोः ॥ ४५ ॥
इत्यादिवचनैस्तादृङ्मुधामत्यय एव सः ॥ तन्निवृत्त्या मता मुक्तिर्देहादिषु न संसृतिः ॥
नैवात्मनो न देहस्य संसृतिः सुविविक्तयोः ॥ अविवेकस्तयोर्योऽसावथ तस्यैव संसृतिः ॥ ४७

एकादशस्याष्टाविंश इति भेदेन रूपणात् ॥ देहादेः संसृतित्वे तु जीवन्मुक्तिर्न युज्यते॥४८॥
प्रत्यक्ष एव देहादिर्मुक्तस्यापि तु जीवतः॥ सति संसरणे मुक्तिः कुतः शास्त्रविरोधिनी॥४९
तस्मादहन्ता देहादावध्यासाभावतो न हि ॥ ममताहन्त्वमूला तु तन्निवृत्त्या निवर्तते ॥५०॥
आत्मलाभे तु विद्यातो मुक्तो जीवन्भविष्यति । देहसंसारभेदोऽतः सिद्धान्तः श्रुतिसम्मतः॥
सम्यक्प्रकारं संसरणं स्वरूपाच्च्यवनं दृढम् ॥ ब्रह्मांशस्यान्यथाभावस्तत्संसरणमुच्यते ॥५२
असत्या संसृतिः सत्यः प्रपञ्च इति निर्णयः॥ ऐन्द्रजालिकवत्स्पष्टं साऽसत्यापि प्रतीयते ॥

जीवा यस्य स्वांशा न प्रतिबिम्बा न चाभासाः ॥
यत्कृतसंसरणास्तच्चरणं शरणं व्रजामि भवतरणम् ॥ ५४ ॥

इति श्रीमद्वल्लभाचार्यमतवर्तिश्रीव्रजवल्लभचरणानुचरपञ्चनदीघनश्याममहात्मजगोवर्द्धनशीघ्रकवि-विरचिते वेदान्तचिन्तामणौ जीवोद्गम संसारनिरूपणं नाम सप्तमं प्रकरणम् ॥ ७ ॥ ॥

## अथ अष्टमं प्रकरणम्

जीवान्तर्यामिणौ स्वांशावणुकौ भोक्तृसाक्षिणौ।येनान्तःस्थापितौ ज्ञाज्ञौ नमस्तस्मै कृपालवे

१ आध्याय

मुण्डकोपनिपदि ॥ द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिपस्वजाते ॥
एकस्तयोः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥ २ ॥
एकादशस्कंधे ॥ सुपर्णावेतौ सहजौ सखायौ यदृच्छया [कृतनीडौ च वृक्षे ॥
एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयान् ॥३॥
भिन्नौ प्रतिशरीरं तावेकैकस्मिन्द्वयोरपि ॥ प्रवेशाद्धंसरूपेण हृदि भागवते यथा ॥ ४ ॥
( स्कन्ध४ ) ॥ हंसावहं च त्वं चार्य सखायौ मानसायनौ ॥
गुहां प्रविष्टावात्मानौ सूत्रेऽप्येतद्गुहा तु हृत ॥ ५ ॥ वाजसनेयिशाखायाम्
यथा व्रीहिर्वा यवो वा श्यामाको वाश्यामाकतण्डुलो वैवमयमन्तरात्मन्पुरुषो हिरंण्मयः ॥
इत्यादिश्रुतिभी रूपं तस्योक्तम् स्मृतिभिस्तथा ॥ ईश्वरः सर्वभूतानां हृद्देशेऽर्जुनतिष्ठति ॥
प्रथमस्कन्धे भीष्मकृतस्तुतौ ॥ हृदि हृदि धिष्ठितमात्मकल्पितानां ॥
स विद्यमानानन्दत्वादैश्वर्यज्ज्ञानतस्तथा ॥ न दुःखसुखभोक्तैषां साक्षी द्रष्टैव किं तु सः ॥
तद्भेदवाक्ये द्वावीशानीशौ ज्ञाज्ञाविति स्फुटम् ॥

१ अध्याय १ पाद २ सू. ११ गुहाम्प्रविष्टावात्मानौ हि तद्दर्शनात् २ आनन्दप्रचुरः

(अ० १ पा० २ सू० ८) सम्भोगप्राप्तिरितिचेन्न वैशेष्यात्त्र सूत्रतः ॥ १ ॥
वैशेष्यं जीवतस्तत्रानन्दधर्म्माविलोपनात् ॥ द्वैतं सृष्टौ तयोरेव न जीवब्रह्मणोः क्वचित् ॥
अन्तर्यामिब्राह्मणेन्तर्यामिपादे च विस्तृतम् ॥ रूपं तस्य ततः स्पष्टं भाष्यादेरवधार्यताम् ॥
सच्चिन्मात्रश्चिरप्रधानोब्रह्मस्यांशो हृदि स्थितः।विसर्पिचैतन्यगुणोऽणुजीवोऽविद्यया सितः
(मुण्डके) एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन्प्राणः पञ्चधा सम्विवेश ॥
इत्यादिश्रुतिभिस्तस्याणुमात्रत्वं निरूप्यते ॥ १३ ॥
(अ० २ पा० ३ सू० २१) नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥
इत्यादिसूत्रतो व्यासचरणैर्निरणायि तत्॥स एष आत्मा हृदीत्यादिभिः श्रुतिभिःरीरितम्॥
(अ० २ पा० ३ सू० २४) अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥
व्यासो प्यसूत्रयदिति तस्माद्धृद्येव संस्थितः ॥ १५ ॥
हृत्स्थो गुणात्सचैतन्यां सम्पूर्णां तनुते तनुम् ॥ कोणस्थितो यथा दीपोऽखिले गेहे प्रकाशते॥

१ आनन्दांशस्य ऐश्वर्यादिधर्माणाञ्चातिरोभावात् ४ बद्धः ५ जीवः ६ चैतन्यासहिताम् विधेयविशेषणमेतत्

कस्तूरिका स्थितैकत्राभिव्याप्नोति स्वगन्धतः। देशं महान्तं देहं स चैतन्येन तथाखिलम् ।१७
कस्तूरिका स्थितैकत्राभिव्याप्नोति स्वगन्धतः। गुणाद्वाऽऽलोकवत्तथा ॥

व्यासो विसर्पिगुणतां (अ० २ पा० ३ सू० २ ५) गुणाद्वाऽऽलोकवत्तथा ॥
(अ० ३ पा० ३सू० २६) व्यतिरेको गन्धवच्चेत्यादिदृष्टान्ततोऽवदत् ॥१८॥

शाङ्करास्तार्किका जीवमेकं व्यापकमालपन् ॥ जीवैकत्वे सर्वमुक्तिरेकमुक्त्या भविष्यति ॥
सति बन्धेनैव मोक्षो यात्येकः पुण्यतो दिवम् ॥ अन्यः पापेन नरकमिति श्रौतं न युज्यते ॥२०
सर्वे जीवा बहुवचः श्रुत्युक्तं च विरुध्यते॥ व्यापकस्योद्गमेनैव नोपाधेर्जीवकल्पनात् ॥२१॥
यत्प्रयन्तीति जीवानां प्रलयो नेह सम्भवेत्॥ज्ञानात्तत्र प्रवेशोऽपि विशते तदनन्तरम् ॥२२॥
किं च जीवः स्वतन्त्रो वा ब्रह्मैवोपहितं तथा॥आद्ये द्वैतं बन्धमोक्षौ नोपि ब्रह्मात्मता भवेत् ॥
न स्यात्कस्यापि मरणं व्याप्तेर्जीवस्य तादृशः।द्वितीये तु न तद्व्याप्तिः किं तु स्याद्ब्रह्मणो हि सा॥

आकाशं व्यापकं व्याप्तिर्घटाकाशस्य न क्वचित् ॥
उपाधिनाशो मोक्षश्चेज्जीवनाशः स कथ्यताम् ॥ २५ ॥

---

१ आलोकः प्रकाशः प्रकाशकद्रव्यं वा २ उपाधेरेवोद्गम इति तु न वक्तुं शक्यम् तस्य त्वन्मते-जीवभ्रान्तिकल्पितत्वात् ३ देहलीदीपकवदस्योभयत्रसम्बन्धः ४ जीवस्य व्यापकता

सर्वाणि रूपाणि विचित्य धीर इति पौरुषम् ॥ सूक्तं श्रुत्यन्तराण्येवं तत्कौर्मे चोपबृंहितम् ॥
सर्वेषां तदधीनत्वात्तत्तच्छब्दाभिधेयता ॥ अन्येषां व्यवहारार्थमिष्यते व्यवहर्तृभिः ॥४९॥
अनामरूपता तस्यालौकिकत्वाय वर्णिता ॥ माहात्म्यबोधनायैव लौकिकोऽस्ति घटो यथा ॥
रूपं नियतमेवास्य तत्तिरोभावशालि च ॥ द्वित्राण्येव च नामानि न तथास्येति निश्चयः ॥

व्याकृतिः सृष्टिकालेऽन्तः पूर्वमव्याकृतिस्तयोः ॥
द्वयोर्ब्रह्मैकनिष्ठत्वं बृहदारण्यके स्फुटम् ॥

तद्धेदन्तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियतेऽसौनामायमिदꣳरूपाय मिति ॥५२॥
एतन्मते सुनिष्पन्नं साङ्गर्थे कार्यकारणे ॥ तन्निवृत्त्यर्थमाचार्य्यैः पदं शुद्धं विशेषितम् ॥ ५३ ॥
शुद्धाद्वैतपदे ज्ञेयः समासः कर्मधारयः ॥ अद्वैतं शुद्धयोः प्राहुः षष्ठीतत्पुरुषं बुधाः ॥५४॥
मायासम्बन्धरहितं शुद्धमित्युच्यते बुधैः ॥ कार्य्यकारणरूपं हि शुद्धं ब्रह्म न मायिकम् ॥५५॥
इति श्लोकत्रयेणात्राद्वैते शुद्धविशेषणम् ॥ गोस्वामिभिर्गिरिधरैर्मार्तण्डे[1] विवृतं स्वके ॥ ५६ ॥
अद्वैते शुद्धता श्रीमद्वल्लभाचार्य्यरूपिते ॥ मतान्तरेषु सर्वत्र दृश्यते द्वैतमेव यत् ॥ ५७ ॥

१ शुद्धाद्वैतमार्तण्डाख्ये स्वग्रन्थे

दुर्म्मतनिरासकृतिनामाचार्य्याणां हुताशनाख्यानाम् ॥
अन्तःकरणविभूषणसुरंपतिरत्नं तमः स मे हन्तु ॥ ९८ ॥

इति श्रीमद्वल्लभाचार्यमतवर्तिश्रीव्रजवल्लभचरणानुचरपञ्चनदीघनश्यामभट्टात्मजगोवर्द्धनशर्मप्रकाविविरचिते वेदान्तचिन्तामणौ जीवान्तर्यामिस्वरूपविवेकपूर्वकशुद्धाद्वैतार्थनिरूपणं नामाष्टमं प्रकरणम्॥८

## अथ नवमं प्रकरणम्

स्वाभिन्नाऽप्राकृतैर्धर्म्मैः श्रितं सर्वैर्विरोधिभिः। शक्तीभिस्तादृशीभिस्तं वन्दे निर्दोषमद्वयम्
अप्राकृताखिलाकारः श्रुतिभिः प्रतिपाद्यते॥ माहात्म्याय स्फुटं भक्त्यै प्राकृतं तु निषिध्यते॥
यत्पाञ्चभौतिकं तस्येच्छया पङ्क्षावदर्शनम्॥ मितं नियतकार्यं च तत्प्राकृतमुदाहृतम् ॥३॥
यथा देहोऽस्मदादीनां पञ्चभूतेभ्य उत्थितः॥ अस्मिञ्जायत इत्याद्या दृष्टा विकृतयोऽपि षट्
मलिनोऽन्यनियम्यश्च मितः सप्तवितस्तिभिः॥ श्रवसा श्रूयते मात्रं दृश्यते मात्रमीक्षया ॥५॥

---

१ नीलमणिः २ अज्ञानमन्धकारं च ३ श्रीकृष्णः ४ स्वाभिन्नाभिरप्राकृतीभिः ५ माहात्म्यज्ञानपूर्वकसुदृढस्नेहस्यैव भक्तित्वं ६ जायते ॥ अस्ति ॥ वर्द्धते ॥ अपक्षीयते ॥ विपरिणमते ॥ नश्यतिव ७ परिच्छिन्नम्

सर्वज्ञं निर्गुणं पूर्णं ब्रह्म बद्धमुपाधिना ॥ तदेवोपाधितो मुक्तं साधनैर्विष्ठवो महान् ॥ २६ ॥
उत्क्रान्तिगत्या गतयो वेदसूत्रादिसम्मतः॥व्यापकस्य नयुज्येरंश्चेदुपाधेः प्रवंक्षि ताः ॥२७॥
तं प्राणोऽनूत्क्रामतीति श्रुतिस्तर्हि विरुध्यते॥श्रुतेः स्मृतेश्च सूत्राणां नव्याभिस्तस्य सम्मता॥
नित्यः सर्वगतस्थाणुर्ब्रह्म सर्वत्र यद्गतम् ॥ सह तिष्ठति तेनाणुरचैलैकार्थतान्यथा ॥ २९ ॥
शरीरे शृण्वतो व्याप्तेः कश्चिद्व्यापकतोदिता ॥ ब्रह्मवद्व्यापकत्वे तूत्क्रान्यश्रुत्यादिबाधनम्॥
शाङ्कराणां मते कर्तृ न प्रपञ्चस्य भोक्तृ च ॥ धर्म्माकारक्रियात्यन्ताभाववद्ब्रह्म कथ्यते ॥३१

मायायां प्रतिविम्बोऽस्य तत्कर्ता शवलाभिधः ॥
प्रतिविम्बस्त्वविद्यायां तस्यं जीवोऽभिधीयते ॥ ३२ ॥

तद्रूपोपाध्यवच्छिन्ने चैतन्ये ब्रह्मरूपिणि ॥ अथवा तौ घटमठोपहिताकाशवत्कृतौ ॥ ३३ ॥
सत्त्वे तु शुद्धमलिने मायाऽविद्ये अनादिमे ॥ तत्रावच्छिन्नपक्षस्तु संक्षेपेण निराकृतः ॥३४॥
दृश्यते प्रतिविम्बस्तु नवाप्यादेर्निराकृतेः ॥ न दृष्टो मलिनेप्येष मृदादावन्यथा भवेत् ॥३५॥

---

१ अध्या १ पा० ३ उत्क्रान्तिगत्या गतीनामित्यधिकरणे प्रसिद्धः २ वदसि ३ जीवस्य
४ स्थाणुचलपदयोरेकार्थकतया पौनरुक्त्यम् ५ चैतन्येन ६ निर्गुणस्य

चेत्तादृग्ब्रह्मणस्तत्र किं न स्याद्वायुदारुणोः॥ अलीकं प्रतिबिम्बं न जीवस्यालीकता कचित्॥
श्रौतो गुहायां नेकस्यां प्रवेशो युज्यते द्वयोः॥इत्यादितत्त्वदीपे चोक्तं विद्वन्मण्डने बहु॥३७॥
अविद्योपाधिरचितं जीवत्वमिति ते जगुः ॥ पारतन्त्र्यं भगवतो द्वैतापत्तिश्च तन्मते ॥३८॥
अंशानां जीवभावस्त्वीशेच्छयोक्तप्रकारया॥शक्त्या विद्योपाधिना तु संसार इति वैदिकम्।
तस्मादेवोद्गमस्तस्मिँल्लयो मध्ये च दृश्यते॥कार्य्यात्मनेच्छया भेदो जडजीवान्तरात्मनाम्
शुद्धाद्वैतमतः सिद्धं श्रुतिस्मृत्यादिसम्मतम्॥ द्वीतं द्वयोरितं ज्ञानं तद्द्वैतं द्वीतमेव यत्॥४१॥
कार्यकारणरूपं तदीशजीवात्मकं तथा ॥ नामरूपात्मकं चेति त्रिविधं समुदाहृतम्॥४२॥
द्विविधं दूषितं तत्राप्यग्रे तद्दूषयिष्यते॥ नामरूपात्मकं द्वैतं शाङ्कराणां यथोदितम् ॥४३॥
अस्ति भाति प्रियं रूपं नाम चेत्यर्थपञ्चकम्॥ आद्यं त्रयं ब्रह्मरूपं मायारूपं ततः परम्॥४४
अस्ति भाति प्रियत्वं तु जातं काय्योत्मनेच्छया॥सच्चिदानन्दरूपस्य व्याकृतिर्नामरूपयोः॥
स सर्वनामा स च सर्वरूप इति कीर्त्यते॥ नामरूपे व्याकरवाणीतीच्छास्याभवत्पुरा ॥४६॥
विभिद्य रूपमेकैकं शब्दजालात्स्ववाचकात्॥ तत्तद्वाचीनि नामानि व्यवहाराय निर्ममे ॥

१ अयनं इतं भावे क्तः २ गत्यर्थकधातूनां ज्ञानार्थकताया अपि स्वीकाराज्ज्ञानमित्यर्थः ३ त्वंश

नित्या धर्मा निजाऽभिन्नाःसर्वे सर्वत्र तस्य तु ॥ सर्वकामः सर्वरस इति च्छान्दोग्यरूपणात् ॥
विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात् ॥
सम्बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन्देव एकः ॥ ७ ॥
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्॥ सर्वतः पाणिपादान्तमिति श्रुत्यादयोऽवदन्॥८॥
सर्वत्र सर्वेन्द्रियाणां तस्यँ तत्कार्य्यमीर्य्यते॥ सर्वज्ञस्याखिलं ज्ञानं सर्वकर्तुः क्रियाखिला॥९॥
न पाञ्चभौतिकं तानि सर्गार्थं स स्वतो व्यधात् ॥
अजत्वादमृतत्वाच्चाविकारित्वान्न विक्रियाः ॥ १० ॥
( स्कन्ध ८ ) त्वं ब्रह्म पूर्णममृतं विगुणं विशोकमानन्दमात्रमविकारमनन्यदन्यत् ॥
विश्वस्य हेतुरुदयस्थितिसंयमानामात्मेश्वरश्च तदपेक्षतयानपेक्षः ॥ ११ ॥
अत एव न मालिन्यमैश्वर्य्यान्न नियम्यता ॥ व्याप्तेःपरिमितिर्नैव मेतदप्राकृताकृति ॥१२॥

१ हस्त २ नभति ३ पृथ्वी ४ दर्शनादिकं ५ चाक्षुषादिः ६ गमनादानादिः ७ भगवतो हस्तादिकं अस्मदादिवत् पाञ्चभौतिकं तु तस्यानादित्वात् महाभूतानांच सृष्टिकालएवाविर्भूतत्वात् ८ स्वस्वरूपात् विरूद्धःकार्यकारणमानइत्याशय ९ जायतइत्यादयः १० लोकवत्परिच्छेदः

सर्वाकाराश्रयत्वं च श्रुतयोऽव्वर्णयन्संशयः॥ मशकेन समो नागेनेत्याद्यास्तद्विभुत्वतः ॥१३॥
प्राकृतं परिमाणादि पाञ्चभौतिकतादिकम् ॥ तस्याऽस्थूलमनण्वादिश्रुतिभिःप्रतिपिध्यते॥
क्रियासु फलसन्देहो देहेऽभिमतिरज्ञता॥ ऊर्मयोलोकनिष्ठानां दोषा इत्यादयो मताः॥१५॥
निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्॥इत्यादिश्रुतयः सर्वं निषेधंस्तत्सदूपणम्॥१६
तस्य प्राकृतशून्यत्वं तथा भागवतादिषु ॥
(स्कन्ध १० अध्याय १०) गृह्यमाणैस्त्वमग्राह्यो विकारैः प्राकृतैर्गुणैः ॥ १७ ॥
श्वेताश्वतरादौ ॥ अपाणिपादो जवनो ग्रहिता पश्यत्यचक्षुः संशृणोत्यकर्णः ॥
स वेत्ति वेद्यं न च तस्य वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ॥१८॥
पाणिपादनिषेधेऽपि गमनग्रहणोक्तितः॥अस्मदादिसमं न्यूनं प्राकृतं प्रतिषिध्य तत् ॥१९॥
विधियन्ते श्रुतौ सर्वः सर्वशक्तेःक्रिया ध्रुवाः ॥
सर्वत्राबाधितं ज्ञानं चैवं सर्वविदो खिलम् ॥ २० ॥

---

१ समोमशकेनेति बृहदारण्यके साम्यं च तत्तन्निष्ठाऽऽकारवत्त्वेन २ कामक्रोधादयः ३ क्रिया
दिकम् ४ गन्ता ५ पाण्यादिरम्

श्रुतौ पञ्चरात्रे च। निर्दोषपूर्णगुणविग्रह आत्मतन्त्रो निश्चेतनात्मकशरीरगुणैश्च हीनः ॥

आनन्दमात्रकरपादमुखोदरादिसर्वत्र च त्रिविधभेदविवर्जितात्मा ॥२१॥

नियताकारकार्य्यत्वन्योन्यबाधक्षयादयः॥ दोषा गुणेषु देहेषु प्राकृतेषु तदिच्छया ॥२२॥

आनन्दमात्राकारः स निर्दूषणगुणाश्रयः॥निर्दोषविग्रहः स्यान्निश्चेतना प्रकृति र्जडा ॥२३

न प्राकृता गुणास्तस्य न शरीरेन्द्रियादिकम्॥इत्युक्तं भगवच्छास्त्रे याज्ञवल्क्यस्मृतावपि॥

अथ वा परमात्मानं परमानन्दविग्रहम् ॥ इत्यानन्दमयाकारः सर्वत्राप्राकृताखिलः ॥२५॥

निषिध्य प्राकृतं तत्र विधत्तेऽप्राकृतं श्रुतिः॥सार्वत्रिकत्वकथनात्तस्याप्राकृतता स्फुटा॥२६॥

सामान्योक्तेर्निषेधेषु लोकसिद्धांशसेधनम्। निषिध्य धर्मान्सर्वत्र प्रायो धर्मान्हि वक्ति सा

नन्वानन्दमयं ब्रह्माऽप्राकृतं प्राकृतं जगत् ॥ निरानन्दकथं ब्रह्म कार्य्यं तद्रूपमद्वयम् ॥२८॥

इति चेदुक्तमेवैतद्ब्रह्मत्वायाखिलं कृतम्॥आनन्दांशोऽखिला धर्मास्ते तिरोभाविता इह ॥ २९

ब्रह्मधर्मतिरोभावादन्योन्यामावदर्शनात् ॥ आविर्भावतिरोभावाभ्यामिदं दृश्यदूषणम् ॥

---

१ स्वगत २ निर्दोषपूर्णेति वचने ३ पञ्चरात्रे ४ भगवतश्चक्षुरादेः ५ लोकतुल्यावयवानां निषेधः ६ उपनिषत्सु ७ श्रुतिः

रागमात्रं घटे मृत्स्ना सवर्णा विलक्षणा ॥ दृश्योर्न वास्तवो भेदस्तथात्राप्यवधार्यताम् ॥
जगत्तु ब्रह्मणो भिन्नं न ब्रह्म जगतः पृथक् ॥ सृष्टिकालेऽपि हि घटो मृदो भिन्नो न मृद्धटात् ॥
करस्त्ववयवत्वेन शरीराद्भिद्यतेऽशकः ॥ शरीरं न कराद्भिन्नं तस्यावयवितांऽशिता ॥ ३३॥
कार्याणि भिन्नभिन्नानि तथात्वांत्तस्य विक्षेया। प्राकृतानि विलुप्यन्तां यथा सामान्यदर्शनम्।
सर्वात्मकमनुस्यूतं सर्वत्र ब्रह्मकारणम् ॥ सर्वधर्माश्रयत्वेनातथात्वात्तदलौकिकम् ॥ ३५ ॥
उक्तवाक्येऽप्यतो रूपं निरूप्याशङ्क्य भिन्नताम् ॥ सर्वत्र च स्वगतभेदविवर्जितातोच्यते ॥ ३६
व्यासेदृंशमवाक्येऽपि गुणानां गृह्यमाणता ॥ निरूपयन्ति श्रुतयस्तस्मादुक्तव्यवस्थया ॥ ३७
अत्राहुः शङ्कराचार्य्या निराकारं परं भवेत् ॥ गुणक्रिया विशेषाणामत्यन्ताभावमन्मतम् ॥ ३८ ॥
तन्मायोपहितं सत्स्यादीश्वरः शवलाभिधः । मायासम्बन्धतः कर्ता भोक्तास्य श्रुतिभिः कृतः
तदुपाधिगतं धर्मा यत्राध्यारोपयन्ति ताः ॥ वस्तुतोऽपवदन्त्येता निर्विशेषे निषेधिकः ॥

१ तिरोहितचिदानन्दत्वाच्च २ बहुस्याम्प्रजायेयेति ३ सामान्यतोयथालोकदृष्ट्याहृश्यन्ते ब्रह्मविदान्त्विमामान्येवाप्रकृतानि ४ निर्दोषपूर्णगुणेति ५ गृह्यमाणैस्त्वमग्राह्यम् ६ ब्रह्मकर्तृकाप्रा- कृतगुणनिष्ठा नतु गुणकर्तृका ब्रह्मनिष्ठा ७ प्रकृतस्य निषेधो प्राकृतस्य विधिः

अध्यारोपापवादाभ्यां श्रुत्योः स्यात्सङ्गतिर्द्वयोः ॥
लोके प्रदर्शनायेन्दोर्यथा शाखापि दृश्यते ॥ ४१ ॥

ज्ञानार्थचित्तशुद्ध्यर्थोपास्तये प्रथमं तथा ॥ निरूप्यते सधर्मत्वं जाते ज्ञाने निषिध्यते ॥४२॥
इति चेच्छ्रूयतां माया सादिः साऽनादिरेव वा॥आद्ये कर्ता तु को ब्रह्मातिरिक्ताभावतः परम्
कर्तृत्वं निर्विशेषस्य पुनः प्राप्तं द्वितीयके ॥ द्वैतापत्तिः सदेवेति प्रभृतिश्रुतिबाधनम् ॥ ४४ ॥
ब्रह्माप्यनाद्यनादिःसोपहितस्याप्यनादिता ॥ सर्गोऽविरतमेवस्यान्न जातु प्रलयो भवेत् ॥
नित्यबद्धं भवेद्ब्रह्म मुक्तिस्तन्नाशने यदि ॥ श्रूयेत क्वापि तस्यापि जीवन्मुक्तिसाधनम् ॥
व्यासाचार्यैः प्रतिज्ञाय निर्गुणस्य विचारणम् ॥ अथातो ब्रह्मजिज्ञासेत्यत्रैतस्यैव लक्षणम् ॥
जन्माद्यस्य यतः शास्त्रयोनित्वादिति कथ्यते ॥ प्रतिज्ञोपक्रमौ भग्नौ स्फुटं व्यासस्य ते मते॥

१ सविशेषनिर्विशेषत्वादितया द्विविधयोः २ ज्ञानसम्पादिका चित्तशुद्धिः तत्सम्पादिका चोपासना ३ निर्विशेषब्रह्मैव कर्तृस्यादित्यर्थः ४ एकं ब्रह्मपरा मायेति द्वैतम् ५ सदेवसोम्येदमग्रआसीत् आत्मैवेदमग्रआसीत् आत्मावाइदमेकएवाग्रआसीदित्यादीनां सृष्टेः प्राग्वस्त्वन्तरसत्तानिषेधकश्रुतीनां विरोधः ६ शबलाख्यापन्नम्

निषेधत्येव कर्तृत्वं प्रकृत्युपहितस्य तु ॥ गौणश्चेन्नात्मशब्दादित्यादिना सूत्रकृत्स्वयम् ॥४९॥
न सोऽकामयतेत्यादिरूपिताः कामनादयः ॥ सम्भवन्ति जडायां निर्धर्मत्वाद्ब्रह्मणो न ते ॥
तस्योपाधिवशात्तत्त्वे निर्विशेषविकल्पताम् ॥ ब्रह्मणो बाधते या सा नश्येत्तज्ज्ञानतः कथम् ॥
न्यायात्प्रक्षालनाद्धीति ह्यध्यारोपापवादतः ॥ धर्माणां लोकसिद्धानामपवादोऽस्तु केवलम् ॥
मायागुणोपासनाश्चेन्मुक्तिः स्याद्धेयता कुतः ॥ ज्ञानोद्भवे पराद्धं वा किं मायारूपया स्त्रिया ॥
इत्यादिदूषणगणैस्तन्मतं श्रुत्यसम्मतम् ॥ आचार्यैः प्रभुभिश्चान्यैर्विस्तरेण निराकृतम् ॥
तस्माद्वृतीच्छया सर्वशक्तिरीश्वर आत्मनः ॥ सर्वमाविश्वकारेदमित्येव श्रुतयोऽवदन् ॥५५
श्रुत्योरुभयवादिन्योर्निर्णये प्राह सूत्रकृत् ॥ तद्व्यवस्थामिमामेव श्रुतिभिः सैव सिध्यति ॥
(अ० ३ पा० २ सू० २२) प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥
कर्त्ता भर्त्ता च भोक्ता च निहन्तापि स एव हि ॥ अहं सर्वस्य स इमाँल्लोकानसृजतेत्यपि ॥५७॥
सर्वकर्त्ता सर्वभोक्ता भर्त्ता भोक्ता महेश्वरः ॥ भर्त्ता सन्भ्रियमाणो विभर्तीत्यादिवचोभरैः ॥
स्वातन्त्र्यं युज्यते कर्त्तुः सृष्टौ स्वातन्त्र्यमीशितुः ॥ मायायास्तस्य शक्तित्वात्करणत्वं पुराणतः ॥

१ उपाधिभूतायामायायाः २ कामादिमत्त्वे ३ प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्

धर्माविर्भावतः स्वस्याप्राकृतात्मत्वासिद्धये ॥ पूर्वं स सेव्यते जाते तादृक्त्वे निश्चलं पुनः ॥
अजानन्स्तस्य माहात्म्यं नैव सेवेत कश्चन। इति माहात्म्यबोधाय प्रवृत्ताः श्रुतयोऽखिलाः ॥
(मुण्डके) दिव्ययो ह्यमूर्त्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः ॥
अप्राणो ह्यमनाः शुभ्र इति दिव्यस्त्वलौकिकः ॥ ६२ ॥
अजन्माऽप्राकृततनुः शुद्धः प्राणीतरोऽमनाः । प्राणिभिः प्राकृतैः सेव्योऽशुद्धैर्न्यूनैर्मनोवशैः ।
यस्याऽप्राकृतधर्म्मा आत्माभिन्नाश्च शक्तयः सर्वाः ॥
सर्वांशभेदहीनं लक्ष्मीनं भजमनो भवद्दीनम् ॥ ६४ ॥

इति श्रीमद्वल्लभाचार्य्यमतवर्तिश्रीव्रजवल्लभचरणानुचरपञ्चनदीघनश्यामभट्टात्मजगोवर्धनशर्मप्रकवि विरचिते वेदान्तचिन्तामणौ ब्रह्मसाकारत्वविवेको नाम नवमं प्रकरणम् ॥ ९ ॥

## अथ दशमं प्रकरणम्

शुद्धाद्वैतं वस्ततस्तु नानाभेदं निजेच्छया। स्वाभिन्नशक्तिधर्माणं नुमो नानामतस्तुतम् ॥१॥ २६
ब्रह्मैवैकं प्रपञ्चस्य निमित्त समवायि च ॥ पुराणे करणं माया तच्छक्तिर्दण्डवन्मता ॥२॥

अचिन्त्या विविधा नित्याः स्वाभाविक्योऽस्य शक्तयः ॥
ज्ञानक्रियादिभेदेन स्वाभिन्नाः स्ववशा विभोः ॥ ३ ॥

श्वेताश्वतरे ॥ न तस्य कार्य्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ॥
परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानक्रियाबलं च ॥४॥

यः सर्वज्ञ सर्वशक्तिरित्यादिश्रुतिभिः श्रुताः ॥ तासु मायाप्यघटितघटनायां पटीयसी॥५॥

( स्कन्ध १० ) श्रिया पुष्टया गिरा कान्त्या कीर्त्या तुष्टयेलयोर्जया ॥
विद्यया विद्यया शक्त्यामायया च निषेवितम् ॥ ६ ॥

इति भागवतोक्ता सुमुख्यासु द्वादशस्वियम् । गणिता कारणत्वेन पुराणे परिवर्णिता ॥७॥

( प्रथमस्कन्धे ) स एवेदं ससर्जाग्रे भगवानात्ममायया ॥
सदसद्रूपया चासौ गुणमय्याऽगुणो विभुः ॥८॥

सामर्थ्यं सर्वभवने तस्य मायेति कथ्यते ॥ शक्तित्वात्तदभिन्नासा विचित्रपरिणामकृत् ॥ ९ ॥
क्वचित्संमोहिका मायाऽविद्यैव व्यपदिश्यते । बहवोऽर्था हि मायाया गीताभाष्ये प्रदर्शिताः ।

---

१ तत्त्वदीपिकाख्ये अजोपि सन्नव्ययात्मेत्यस्य व्याख्याने

मायाशब्दः क्वचिच्छास्त्रे हरिसामर्थ्यवाचकः ॥ क्वाप्यविद्या कृपावाची कृपाकपटवित्तवाक्॥
शक्तिशक्तिमतोर्भेदो वस्तुबोधाय केवलम्। अभेदो वस्तुतो नाक्ष्णो दृष्टिशक्तिः पृथग्भवेत्॥
न धर्मधर्मिणोर्द्वैतमप्यस्याप्राकृतस्य तु ॥
(अ० ३ पा० सू० २८) प्रकाशाश्रयवद्वा तेजस्त्वादिति हि सूत्रितम् ॥१३॥
तेजः प्रकाशयोर्भेदो न तेजस्त्वाद्यथा तथा॥ब्रह्मणः शक्तिधर्माणां ब्रह्मत्वेन भिदा न हि
न भूमिर्गन्धतो भिन्ना न गन्धो भूमितः पृथक्॥ तद्वत्तु तादृगेवेति न द्वैतं धर्मधर्मिणोः॥१५॥
अस्मिंस्त्वलौकिकेऽचिन्त्येऽद्वये भेदो न सर्वथा। सुविस्तृतमिदं भाष्ये श्रीविद्वन्मण्डने तथा।
माध्वाचार्या इह प्राहुर्जगत्कर्ता कुलालवत्॥भिन्नो निमित्तमेवेशो विकारात्समवायिनः॥१७॥
प्रकृतिः स्यादुपादानं तत्तन्त्रास्य जडस्य तु ॥ प्रकृतिर्ह्यस्योपादानमिति भागवतोक्तितः॥
ब्रह्मणो जडजीवानां द्वैतमेवास्ति वास्तवम् ॥ जीवब्रह्मभिदां वक्ति द्वा सुपर्णा श्रुतिर्यतः ॥
इति चेच्छ्रुयतामुक्त्वा सूत्रकृद्ब्रह्मकारणम्॥ जन्माद्यस्येति सूत्रेण केवलं न निमित्तता॥ २०॥

१ पुरुषधृतनखनरपृथक्कर्तुं न शक्यते २ ईश्वराधिना ३ जगतः ४कारणसाधर्म्यादिति भावः
५ मुण्डके पैङ्गिरहस्यब्राह्मणे चेदम्

समवायित्वमप्यस्येत्याह तत्तु समन्वयात् ॥ रत्यभावो न युज्येत नैव रेमे श्रुतीरितः॥ २१ ॥
अस्यैवाग्रे सहैतावानासेति समवायिता ॥ पठ्यते समवायित्वं तैत्तिरीयादिषु स्फुटम् ॥ २२ ॥

असद्वा इदमग्र आसीत् ॥ ततो वै सदजायत ॥ तदात्मानꣳस्वयमकुरुत ॥
तस्मात्तत्सुकृतमिति ॥ आत्मानमित्युपादानं निमित्तमकरोदिति ॥
अभावोऽन्यनिमित्तस्य स्वयमित्यभिधीयते ॥ २३ ॥

ऐतदात्म्यमिदं सर्वं ॥ आत्मैवेदं सर्वं ॥ सर्वं खल्विदं ब्रह्म ॥
पुरुष एवेदꣳ सर्वं ॥ यद्भूतं यच्च भाव्यम् ॥ श्रुतिभिः स्मृतिभिः प्रोक्ता
जगतो ब्रह्मरूपता ॥ बाध्येत प्रकृतिस्त्वाविरासास्यांशः सदात्मकः॥२४
अतस्त्वदुक्तवाक्येऽपि ब्रह्म तन्त्रितयं स्वहम्॥प्रकृतेः पुरुषस्यापि कालस्य हारिरूपता २५
यत्रं येनेतिपद्योक्ताऽग्रेऽप्येतद्दर्शयिष्यते॥सर्गान्तरे तथात्वेऽपि निदानं तु तदेव हि ॥२६॥

१ अकुरुतेत्यस्यार्थिकोनुवादः २ दण्डादितुल्यस्य ३ प्रकृतिर्ह्यस्योपादानमितिवाक्ये ४ प्रकृतिः पुरुषःकालश्चेति ५ निबन्धे यत्रयेनयतोयस्येतिश्रीभागवतवचनव्याख्याने ६ कदाचित्पुरुषद्वारेति निबन्धोक्तेः ७ प्रकृतेर्जगत्कारणत्वे ८ प्रकृतिकारणत्वाज्जगतआदिकारणम् ९ ब्रह्मैव.

अग्नोर्णनाभिदृष्टान्तोऽप्यनेकत्र निदर्श्यते ॥ समवायेऽप्यविकृतिः पूर्वमेव प्रदर्शिता ॥२७॥
सर्वत्राद्वैतमेवोच्चैर्वदन्ति श्रुतयोऽखिलाः ॥ पुमान्कथञ्चिदपि हि द्वैतज्ञानेऽपि दुष्यति २८॥
द्वा सुपर्णा श्रुतौ सृष्टौ जीवान्तर्यामिणोर्भिदा ॥ वृक्षाश्रयत्वसहजत्वादिनैव परस्य यत् २९
तत्वमस्यादिवाक्यानि तदभेदं वदन्ति च ॥ अभेदोंशांशिभावेन ब्रह्मस्वांशः स यन्मतः ३०
स्वांशत्वमंशो नानाव्यपदेशादित्युपक्रमात् ॥ व्यासेन बोधितं सूत्रे तथा स्मृतिपुराणयोः ॥
ममैवांशो जीवलोके जीवभूतः सनातनः ॥ मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ३२

( स्कन्ध १० ) स्वकृतपुरेष्वमीष्वबहिरन्तरसंवरणं तव पुरुषं
वदन्त्यखिलशक्तिधृतोंऽशकृतम् ॥ इति नृगतिं
विविच्य कवयो निगमावपनं भवत
उपासतेऽङ्घ्रिमभवं भुवि विश्वासिताः ॥ ३३ ॥

भेदाभेदं ब्रुवाते आचार्य्यौ निम्बार्कभास्करौ ॥ निम्बार्काणां मते भेदो वास्तवो माध्ववन्मतः

१ अभिन्ननिमित्तोपादानत्वे २ देहाश्रयत्वम् ३ सदृश ४ जीवः ५ उपक्रमं विधाय ल्यब्लोपपञ्चमी

५ विभिन्नांशा इमे जीवा इति भेदो विनिश्चितः॥
पुत्रादयो विभिन्नांशाः स्वांशाः करपदादयः॥विभिन्नांशा इमे जीवा इति भेदो विनिश्चितः॥ सादृश्याच्चन्द्रता यथा ३६
एषां चित्वेन साधर्म्यादभेदोऽपि निरूप्यते॥मुखस्याल्हादकत्वेन सादृश्याच्चन्द्रता यथा॥ तत्राप्यवहितः शृणु ॥३७॥
अंशत्वं माध्ववत्तेषां भेदाभेदौ व्यवस्थया॥ सिद्धान्तवदणुत्वादि तत्राप्यवहितः शृणु ॥ न ते मते ॥३८ ॥
स्वांशत्वमेव जीवानां ममैवेत्येवकारतः ॥हेतुः सङ्गच्छते नाना व्यपदेशो न ते मते ॥ स्वांशतैव तथा सति
पादोऽस्यविश्वा भूतानीति पादत्वेन चांशताम्॥ मन्त्रवर्णादिति व्यासः स्वांशतैव तथा सति ॥ कृत्स्नमिदं जगत्
वन्हिस्वांशो विस्फुलिङ्गोऽसौ दृष्टान्तीकृतः श्रुतौ॥अस्यावयवभूतैस्तु व्याप्तं कृत्स्नमिदं जगत्
इत्यादिश्रुतिभिर्जीवाःस्वांशा अवयवोक्तितः॥काप्यश्रुतं विभिन्नांशत्वं सर्वत्राभिदाऽनयोः
यत्त्वाह माध्वो वनमालिदासो राश्येकदेशोंऽश इहास्तु चन्द्रात् ॥
यथा शतांशो गुरुमण्डलं स्यादित्थं मयान्यत्र तदप्यदूषि ॥ ४२ ॥
यथा सौम्येति मृत्पिण्डदृष्टान्तोऽत्र पराहतः॥ प्रतिज्ञैकविज्ञानात्सर्वविज्ञानमित्यपि॥४३

१सूत्रेषु द्वितीयस्य तृतीयपादे प्राहेतिशेषः२जीवब्रह्मणोः३ द्वैतमते भेदाभेदमते च४ छान्दोग्येअपितमादेशमप्राक्षोयेनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति मुन्डकादिषु कस्मिन्नुखलु भगवो विज्ञातेसर्वमिदं विज्ञातं स्यादित्यादि

अभेद एव श्रुतिषु तत्वमस्यादिषूदितः ॥ बन्धे द्वैतभ्रमो मोक्षे तन्निवृत्तिर्निगद्यते ॥४४ ॥
तैत्तिरीये ॥ यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते ॥ अथ तस्य भयं
भवति ॥ बृहदारण्यके ॥ यत्र हि द्वैतमिव भवति तदितर इतरं
पश्यतीत्याद्युक्त्वा यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कंपश्येदित्यादि ॥
तथा योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मि न स वेद यथा पशुः॥ ४५ ॥
निन्दन्ति श्रुतयो द्वैतं दोषो ज्ञाने तथा महान्॥श्रौतं ब्रह्मप्रपञ्चैक्यं घटते न मते च ते॥४६॥
(सप्तमस्कन्धे अ० ९) यस्मिन्यतो यर्हि च येन यस्य यस्मै यस्माद्यथा यदुत यस्त्वपरः परो वा
भावः करोति विकरोति पृथक्स्वभावः संचोदितस्तदखिलं भवतः स्वरूपम् ॥४७॥
भास्कराणां मते भेद औपाधिक उदीरितः॥अभेदस्त्वंततो जीवो व्यापको लिङ्गतोऽणुता४८
इहापि व्यापिता जीवतया ब्रह्मतयाथवा ॥ आद्ये नैयायिके वेशोद्वितीये शाङ्करे तथा ॥४९॥
पुरा निराकृता व्याप्तिर्द्वैधोपाधिकताणुता॥नित्यस्वाभाविकैश्वर्य्यज्ञानादेर्यदि रोधकः५०

१ निगदेन प्रतिपाद्यते २ उच्छब्दोऽप्यर्थेअरमल्पमपि अन्तरं भेदम् ३ उपाधिनाशे ४ आणुत्वश्रुतिर्लिङ्गशरीरकृतपरिच्छेदाभिप्रायेण ५ प्रवेशः ६ जीवत्वेन ब्रह्मत्वेन च

घटेतोपाधिरेवान्यो नाऽबाधाखिलधर्मिणः ॥ अद्वयस्य स्वतन्त्रस्य दूरे तन्मूलिकाभिदा ॥
(स्कन्ध १०) व्रजँस्तिष्ठन्पदैकेन यथैवैकेन गच्छति॥यथातृणजलौकैव देही कर्मगतिं गतः
इत्यादिना वक्ति नाना तस्य भागवतं गतीः॥अन्यानि संयाति नवानि देहीत्यादिका स्मृतिः
पूर्वत्यागो गतिर्देहान्तरे व्याप्तस्य नोचिता ॥ इदं लिङ्गस्य चेद्ब्रूयाद्देहः कर्मगतिं गतः ॥५४॥
अत्र देहीति सङ्घातदेहवान् भिन्न उच्यते॥त्याज्यप्राप्यत्वकथनात्स्थूलदेहस्य नेह सः॥५५
इत्यादिश्रुत्यादिमूलैर्मतान्येतानि दूषणैः॥प्राचामाचारतोवाचामर्वाचामपि स्फुटैः ॥५६॥
समनुद्य पृथङ्माध्वकिरणादिषु विस्तरात् ॥ निरस्तानि मया शुद्धाद्वैतचन्द्रोदयादिषु ॥
अभेदो वास्तवो ब्रह्मजगतोरैच्छिकी भिदा॥जीवाः स्वांशाः प्रवेशादिसिद्धान्तः श्रुतिसंमतः

निवन्धे॥सजातीयविजातीयस्वगतद्वैतवर्जितम् ॥
ब्रह्मोक्तं श्रीमदाचार्यैर्द्वैतगन्धोपि नास्ति नः ॥ ५९ ॥

तत्र जीवाः सजातीया विजातीया जडा मताः॥स्वगता अन्तरात्मानो भिन्ना घटशराववत्॥

---

१ तर्हीतिशेषः २ शुकः ३ वाक्ये ४ जलेसैन्धवखिल्यवत् जीवानांब्रह्मणि प्रवेशः वन्हेर्विस्फुलिङ्गवत्तोनिर्गम इति

अभिन्ना ब्रह्मणो स्वत्वाद्घटादेरभिदा यथा ॥सजातीयादिभेदानां स्वरूपं च यथोदितम्॥६१
वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिषु ॥ वृक्षान्तरात्सजातीयो विजातीयः शिलादितः ॥६२

शुद्धाद्वयनैयजयकृद्दयया मयद्धवप्रभवभाजाम् ॥
कारणमाह यमेकं तमनुत्सेकं भजस्व सविवेकम् ॥ ६३ ॥

इति श्रीमद्वल्लभाचार्यमतवर्तिश्रीमद्व्रजवल्लभचरणानुचरपञ्चनदीवनश्यामभट्टात्मजगोवर्द्धनशर्मकविविरचिते वेदान्तचिन्तामणौ शक्तिधर्माभेदनिरूपणपूर्वकद्वैतमतनिराकरणं नाम दशमं प्रकरणम् ॥

यद्रूपश्चेदं चिरसर्गः स्पष्टः सृष्टो न ते नयः ॥ सर्वत्र सन्नविज्ञातोऽस्मै नमोऽनुप्रवेशिने ॥१॥
यः सर्वत्रैव संतिष्ठन्नन्तरः संस्पृशोत्र तत्र ॥ शरीरं तन्न वेदेत्थं योऽनुविश्य प्रकाशते ॥२॥
इत्याहुः श्रीमदाचार्याः शास्त्रार्थे ब्रह्मरूपणे ॥ सङ्क्षेप कथ्यतेऽत्रार्थो यः पृथिव्यामिति श्रुतेः ॥

---

१ विद्यारण्यादिभिः कथितम् २ विद्यारण्यकारिकेयम् ३ सिद्धान्तः ४ अर्थात्श्रीमदाचार्याः ५ मतान्तरेषु जगत्कारणतयोक्तानामविद्यातद्गुणप्रकृतिचिदचिच्छरीरप्रभृतीनां व्यावर्तनायैकमिति ६ पुरुषोत्तमम् ७ जडजीवसर्गः ८ प्रपञ्चसत्ताकाले ९ जडजीवाभ्यां शुद्धः १० निबन्धश्लोकोऽयम् ११ शास्त्रार्थप्रकरणे

वृहदारण्यकेऽध्याये पञ्चमे तत्र सप्तमे ॥ ब्राह्मणे पठ्यते वाक्यमन्तर्यामिनिरूपके ॥ ४ ॥
(पृ० ६ १६) यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः
पृथिवीमन्तरो यमयत्येष तआत्मान्तर्याम्यमृत इत्यादि ॥
रामानुजा वदन्तीह विशिष्टाद्वैतवादतः॥ श्रुतावस्यां पृथिव्यादिसप्तम्याऽऽधाररूपणात्॥५
अतस्तस्योच्यते भेदो यथाऽऽस्ते भूतले घटः ॥ इति वाक्ये भूमितआद्यभेदः प्रतीयते ॥
अतः पृथ्व्यादिकं व्याप्यं भिन्नमेवाखिलं परात् ॥ ब्रह्मणो हि शरीरे द्वे नित्ये चिदचिती मते ॥
सूक्ष्मे कारणरूपे ते याभ्यां स्थूलमभूज्जगत् ॥ चिच्छरीरात्तु चित्कार्यमचिद्वाचिच्छरीरतः ॥
विभागानर्हता नामरूपयोः सूक्ष्मता मता॥नामरूपव्याकरणं तस्यैव स्थौल्यमुच्यते ॥९॥
ब्रह्मैवं सूक्ष्मचिदचिद्विशिष्टं कारणं श्रुतेः ॥ कार्यं च स्थूलचिदचिद्विशिष्टमिति निर्णयः॥
विशिष्टाद्वैतमनयोरद्वैतं तद्विशिष्टयोः ॥ विशेषणे चिदचिती ब्रह्मणः कारणात्मके ॥ ११॥
सूक्ष्मे स्थूले तु ते कार्यात्मके कार्यविशेषणे॥जीवस्तु स्थूलचित्स्थूलमचित्पृथ्व्यादिकं मतम् ॥
अन्तःस्थितो नियंतेहाऽनुप्रविष्टो विभागकृत् ॥ उक्तश्रुतौ पृथिव्यादेर्जडस्यान्तःस्थितः श्रुतः

१परमात्मनः २पृष्ठचन्तामिदम् ३शरीरद्वयस्य ४उक्तवाक्यात् तच्चैशिष्ट्येप्रमाणम् ५ चिदचितोः

जीवस्यापि तथा काण्वैर्यो विज्ञाने इतीरणात् ॥ य आत्मनीति तत्पाठभेदान्माध्यन्दिने श्रुतम्
शरीरत्वं च तत्रैव श्रुतं तस्यैतयोर्द्वयोः ॥ जीवो जडोन्तरात्मेति भोक्तृभोग्यनियामकाः ॥
क्रमात्त्रयः पदार्थास्तैर्मतास्तत्कारिका यथा ॥ ईश्वरश्चिदचिच्चेति पदार्थत्रितयं हरिः ॥

ईश्वरश्चित इत्युक्तो जीवोदृश्यमचित्पुनः ॥ १६ ॥

द्रव्याद्रव्यप्रभेदादिततमुभयविधं तद्विधं तत्त्वमाहु
द्रव्यं द्वेधा विभक्तं जडमजडमिति प्राच्यमव्यक्तकालौ ॥
अन्त्यं प्रत्यक्पराक्च प्रथममुभयधा तत्र जीवेशभेदात् ॥
नित्या भूतिर्मतिश्चेत्यपरमिहजडामादिमां केचिदाहुः ॥ १७ ॥
॥ तत्र ॥ द्रव्यं नानादशावत् प्रकृतिरिहगुणैः सत्त्वपूर्वैरुपेता ॥

१ अन्तःस्थितः २ यो विज्ञाने तिष्ठन् विज्ञानादन्तर इत्यादि काण्वानां बृहदारण्यके पाठः ३ य आत्मनि तिष्ठन्ना
त्मनोन्तर इत्यादि ४ वाक्यम् ५ माध्यन्दिनबृहदारण्यके ६ एतयोर्जडजीवयोस्तस्य ब्रह्मणः शरीरभूतत्वम्
७ यस्य पृथ्वी शरीरमित्यादिभिर्जडस्य यस्य विज्ञानं शरीरं यस्य आत्मा शरीरमिति जीवस्य ८ अस्तीति पृथ
ग्वाक्यम् ९ इदमुत्तरान्वयि तेष्वीश्वरस्तु हरिरित्यर्थः न त्विह पदार्थः त्रयस्य हरित्वं विधीयते द्वैतभङ्गापत्तेः

कालेऽब्दाद्याकृतिः स्यादणुरखगतिमाञ्जीव ईशोऽन्य आत्मा ॥
सम्प्रोक्ता नित्यभूतिस्त्रिगुणसमधिका सत्त्वयुक्ता तथैव ॥
ज्ञातुर्ज्ञेयावभासा मतिरिति कथितं सङ्ग्रहाद्द्रव्यलक्ष्म ॥ १८ ॥

इत्थं वेंकटनाथाद्या विस्तराच्छ्रुतियुक्तिभिः ॥ तत्त्वग्धरासहस्रादौ पदार्थं व्यभजन्त ते ॥
लये क्रमाज्जीवजडौ शरीरे चित्यऽचित्यपि ॥ विलीयेते नामरूपाऽविभागेन प्रवेशतः ॥
वस्तुतो भिन्नमेवैतद्ब्रह्मणश्चिदचित्सदा ॥ स्वरूपतः स्वभावाद्यैः शरीरत्वादभेदवाक् ॥
सूक्ष्मे चिदचितो ब्रह्म तत्त्वानि त्रीणि कारणे ॥ स्थूले ते च तदन्तस्थः कार्ये तत्त्वत्रयं मतम् ॥
तत्स्थूलसूक्ष्मचिदचिद्विशिष्टे कार्यकारणे ॥ क्रमात्तयोरभेदस्तु विशिष्टाद्वैतमीर्यते ॥ २३ ॥
चिच्छरीरेण चित्कार्यस्याचितो चिच्छरीरतः ॥ अन्तस्थेन परस्यैक्यं न त्रयाणां परस्परम् ॥
अस्मन्मतेऽपि भेदश्चेज्जडजीवान्तरात्मनाम् ॥ निबन्धे तन्मतं तत्त्वत्रयं स्यादिति चेन्नहि ॥
जडो जीवोन्तरात्मेति कार्यमेव त्रिधा मतम् ॥ कारणं त्वेकमेवेदमद्वैतैकरसं परम् ॥ २६ ॥

१ नामरूपविभागोच्छेदकात्प्रवेशात् २ पञ्चमीयम् ३ सृष्टिप्राक्कालल‌योत्तरकालयोरपिनाभेदइति भावः ४ इमेभेदे हेतवः ५ ब्रह्माभेदोक्तिस्तयोः शरीरत्वाभिप्रायादौपचारिकी ६ चिदचिती

स बहुस्यां प्रजायेयेतीच्छामूलः परस्परम् ॥ कार्यमात्रत्वतो भेदस्तेषां घटशराववत् ॥२७॥
न नित्यो वास्तवस्त्वेषां भेदः कुड्यकुसूलवत् ॥ सत्त्वेनाभेदवत्तेषामभेदोऽत्रास्तिवास्तवः ॥
सर्वं पुरुष एवेदं नेह नानास्ति किञ्चन ॥ मृत्योःसमृत्युमाप्नोति य इह नानेव पश्यति ॥
द्वैतदृष्टेर्द्वितीयाद्वै भयं भवति सर्वथा ॥ आत्मेति तूपगच्छन्ति ग्राहयन्ति च तद्विदः॥३०॥
बृहदारण्यके पुरुषविधब्राह्मणे ॥ ( पृ० २१९ ) तद्यो यो देवानां प्रत्यबुध्यत सएव तद
भवत्तथाऋषीणां तथा मनुष्याणां तद्वैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहंमनुरभवंसूर्यश्चेति ॥
तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदंसर्वं भवति तस्य ह न देवाश्च नाभूत्या
ईशत आत्मा ह्येषांस भवति अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स
वेद यथा पशुरेवंस देवानामित्यादि ॥ ब्रह्मविद्ब्रह्मैव भवतीत्यादिश्रुतिषु स्फुटम् ॥
कार्येऽपि भिन्नंचिदचिद्विशिष्टं तेन वारितम् ॥ ३१ ॥

---

१ जडजीवान्तर्यामिणाम् २ घटादीनाम् ३ जडादिषु ४ अनौपचारिकः ५ कठस्थं वाक्यद्वयम् ६ बृहदारण्यके स्फुटमिदम् ७ (अ० ४ पा० १ सू० ३ ) ग्राहयन्तिचेत्यन्तं सूत्रम् ८ नित्यं कार्यावस्थायां चिदचिद्विशिष्टकथनेपि तत्तात्त्विकभेदानङ्गीकारान्निबन्धाऽविरोधाय॥भिन्नपदम्

अथ ब्रह्मातिरिक्तस्य कारणत्वं निवारये ॥ एकमेवाद्वितीयं तद्वेदे ब्रह्मैव कारणम् ॥ ३२॥
नासदासीन्नो सदासीन्नान्यत्किञ्चिन्मिषत्तदा॥स्वभिन्नचिदचित्सत्त्वे त्वेकोऽहमिति वाध्यते
वृहदारण्यके (पृ० १२५) आत्मैवेदमग्र आसीत्पुरुषविधः सोऽनुवीक्ष्य नान्यदात्मनोऽ
पश्यत् ॥ तत्रैव (पृ० १९८) ब्रह्म वाइदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मा
त्तत्सर्वमभवत् ॥ तत्रैव (पृ० २५७) आत्मैवेदमग्र आसीदेक एव सोऽकामयतेत्यादि ॥
च्छान्दोग्ये श्वेतकेतुविद्यायाम् ( खण्ड २ ) सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयं०
सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहुस्यां प्रजायेयेति ॥ तत्तेजोऽसृजत ॥
बह्वृचानामैतरेयोपनिषदि ॥ आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चनमिषत् स ऐक्षत
लोकान्नुसृजा इति स इमाँल्लोकानसृजतेत्यादि ॥ तैत्तिरीये ॥ तस्माद्वा एतस्मादात्मन आ
काशः सम्भूत इत्यादि ॥तथा॥ सोऽकामयत बहुस्यां प्रजायेयेति॥स तपोऽतप्यत ॥स तपस्त
प्त्वा ॥ इदꣳ सर्वमसृजत ॥ अग्रे॥ तदात्मानꣳ स्वयमकुरुत ॥ तस्मात्तत्सुकृतमुच्यत इति ॥
स्वयं पर्यणमद्ब्रह्म जगद्रूपेण केवलम् ॥ ब्रह्मणोऽन्ये शरीरे तु युज्येते नैव जीववत् ॥३४॥

---

१ लोका अम्भःप्रभृतयः पदार्थास्तत्र प्रसिद्धाः २ प्रयोजनशून्यम् ३ सूक्ष्मशरीररहितम् ४ शरीरिभिन्ने

अशरीरं शरीरेषु ह्यनवस्थेष्ववस्थितम् ॥ महान्तं विभुमात्मानं मत्वा धीरो न शोचति॥
शरीराभावमेतस्य ये पठन्ति कठादयः ॥ नेदं जीवपरं वाक्यं ब्रह्मप्रश्नोत्तरे स्थितम् ॥ ३६ ॥
( अ० १ पा० ४ सू० ६ ) त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥
इति सूत्रे स्फुटमिदं विभुत्वं चेहबाधकम् ॥ आनन्दमात्रकरपादमुखोदर एवसः ॥३७ ॥
साकारः श्रूयते जीववद्भिन्नावयवो न सः ॥ सूत्रे तदत एवाह च तन्मात्रमिति स्फुटम् ॥ ३८॥
शरीरेष्वित्युक्तितस्तेंकल्प्येते चेद्बहूक्तितः अनवस्थत्वोक्तितो द्वे एव नित्ये च ते कुतः ॥

किं च ते किं परिच्छिन्ने न वाऽऽद्ये परिमातृका ॥

अणुर्वा मध्यमानैव सा प्रसिद्धा तयोःक्वचित् ॥ ४० ॥

परिच्छिन्नतयानन्तविश्वोत्पत्तौ क्षयोऽनयोः ॥ किं चैतयोरधिष्ठानं वाच्यं ब्रह्मैवचेत्स्वयोः॥
शरीरयोरधिष्ठानं शरीरीति न सङ्गतम् ॥ अपरिच्छिन्नपक्षे तु साङ्कर्यं न कुतो भवेत्॥४२॥

---

१ वाक्यजीवपरत्वे आवयोः सिद्धान्ते तस्याणुत्वात् २ सूक्ष्मशरीरे ३ शरीरेष्वितिबहुवचनात् द्वे एव कुतः अनवस्थत्वाच्च नित्ये कुतइत्यन्वयः ४ परिच्छेदपक्षे ५ श्रुत्यादौ ६ वाच्यमित्यन्तंपृथग्वाक्यम् ७ इदमुत्तरान्वयि

अन्योऽन्यस्मिन्नयतोऽन्योऽन्यं विभुत्वे नास्ति सर्वदा ॥
अतो विभाजकं किंस्याद्देशकालाद्यसम्भवात् ॥ ४३ ॥
देशाभेदेऽप्यसाङ्कर्यं विभुत्वं च न मूर्तयोः॥दृश्यतेऽथोद्गमार्थं चाऽसाङ्कर्यार्थं जडात्मनोः ॥४४
तिरोभावादि वक्तव्यं तत्प्रसिद्धं न ते मते ॥ इत्यादिदूषणैर्वक्तुं न शक्ये चिदचित्तनू॥४५॥
नापि शक्यं तयोः सत्तासृष्टेः प्राग्ब्रह्मभिन्नयोः ॥ आत्मैवेदमग्र आसीत्सदेवेत्येवकारतः ॥
एकमेवाद्वितीयं तदित्यादिश्रुतिकोपनात् ॥ इह सत्तत्त्वमस्यादौ तच्च ब्रह्मैव गीयते ॥ ४७ ॥
ओंतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ॥ अहमेवासमेवाग्रे नान्यद्यत्सदसत्परम् ॥
पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम् ॥श्रूयते सोऽनुवीक्ष्यान्यंन्नात्मनोऽपश्यदित्यपि

१ विभुत्वाद्देशस्य विभाजकत्वमसम्भवि सार्वदिकत्वाच्च कालस्य सृष्टेःप्राक्कालादीनांसुतरामसम्भवश्च २ विस्फुलिङ्गवदुद्गम्य पतनार्थम् देशान्तरमपेक्षितमितितदर्थम् ३ परस्परतो वैलक्षण्यानुभावार्थम् उभयोर्विभुत्वेतदननुभवापत्तेः ४ जडजीवयोः ५ तिरोऽसानीतिश्रुत्या यथा ब्रह्मणः पूर्वमुपपादितं तथा ६ वक्तुंभितिशेषः ७ सदेवसोम्येतिवाक्ये ८ गीतायां प्रतिपाद्यते ९ गीतावाक्यमिदम् १० आर्थिकानुवादाभिप्रायात्पदविपर्यासःछन्दोनुरोधात् श्रुतौ तु नान्यदात्मन इतिपाठात्

सती स्वोन्ये चिदचिती द्दष्टेनान्वीक्षयापिचेत् ॥ सर्वज्ञत्वं व्यापकत्वमीशत्वं तस्य भज्यते ॥
द्वितीयेच्छा रत्यभावमूलिकैकाकिनः श्रुतौ ॥ एकाकित्वं रत्यभावो द्वितीयेच्छा च बाधिताः
नन्वेक एवाहमासमित्यादौ देहजीवयोः ॥ द्वयोः सत्वेऽप्येकपदं तदभेदाश्रयाद्यथा ॥५२॥
तथा द्विदेहयुग्ब्रह्माऽत्रात्मशब्देन गृह्यते ॥ तथैकोऽहं स्थलेऽतोन्यन्नासीत्किञ्चित्तदेति चेत्
मैवं जीवस्य देहेऽहंमत्ययोऽध्यासजो मृषा ॥ अविद्ययेशेच्छयास्तीत्येकत्वं प्रयुनक्ति सः॥
न तथा ब्रह्मणो मिथ्याऽध्यासोऽज्ञानैकहेतुकः ॥ स्थिराऽनवद्यसङ्ख्येयकल्याणगुणशालिनः
सर्वज्ञस्याऽविलिप्तस्य स्वतन्त्रस्य नियामिनः। स्वाधीनाऽविद्यादिशक्तेर्नित्यमुक्तस्य युज्यते

अथात्मैवेदमित्यादौ सर्वस्याप्यात्मरूपता ॥
प्राक्सर्गाच्छ्रूयते नान्याचिदचिद्रूपता क्वचित् ॥ ५७ ॥

---

१ विद्यमाने २ स्वप्रतियोगिकतात्विकभेदवती ३ स वै नैव रेमे तस्मादेकाकी न रमते साद्वितीयमैच्छत सहैतावानासेति बृहदारण्यके ४ चिदाचित्सत्वादेकाकित्वस्य ताभ्यां सहैव रतिसम्भवात्तदभावस्य ततएवद्वितीयेच्छायाश्च बाधः ५ चकारात्सर्वरूपेणभवनमपिबाधितम् ६ लौकिकप्रयोगे ७ सोनुवीक्ष्य नान्यदात्मन इत्यादौ ८ अविद्याकरणकबन्धेऽयं हेतुः ९ जीवः १० प्रत्येकमियत्तारहितः

विरुद्धां ब्रह्माभिन्नत्वाद्वस्तुतो जडजीवयोः ॥ आत्मशब्दस्य चिदचित्परत्वं तु न शक्यते ॥
निर्गुणः पर एवैकस्तदर्थ इति निर्णयात्॥गौणश्चेन्नात्मशब्दादित्यादौ तत्सर्वसंमतम् ॥५९
उपादानं सहैतावानास्येत्युक्त्या तदेव हि॥ तथाऽभिन्ननिमित्तोपादानदृष्टान्तपूर्वकम्॥६०॥
सर्वेषां जडजीवानां तत एवैकतः श्रुतः ॥ उद्गमो न तु तद्भिन्नचिदचिद्धेहतः क्वचित् ॥६१॥
बृहदारण्यके दृप्तबालाकिब्राह्मणाख्ये चतुर्थाध्यायप्रथमब्राह्मणे ( पृ० ३७२ ) स यथोर्ण
नाभिस्तन्तुनोच्चरेद्यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः
सर्वेलोकाः सर्वेदेवाः सर्वाणि भूतानि व्युच्चरन्तीति॥अनेकोपनिषद्दुष्टमेतत्किं बहुविस्तरात्॥
न च जीवप्रकरणाद्वाक्यं जीवपरं त्विदम्॥६२॥अणुमात्रात्ततः सर्वानुद्गमाल्लिङ्गबाधनात् ॥
भवेल्लिङ्गं प्रकरणाद्बलिष्ठं पूर्वतन्त्रतः ॥ ६३ ॥
सुषुप्तौ ब्रह्मलीनस्य ततं उद्गमबुद्धये ॥ सर्वेषामुद्गमस्तस्मात्स्यते परमात्मनः ॥ ६४ ॥

---

१ जडजीवयोर्ब्रह्मात्मकता २ आत्मशब्दार्थः ३ ब्रह्मैव ४ महतां प्राणलोकादीनां जीवसकाशादु
द्गमासम्भवात् ५ श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादितिपूर्व
मीमांसासूत्रात् ६ जीवस्य ७ ब्रह्मतः.

अथोत्पत्त्यप्ययाधारं तमेवोक्त्वा तदात्मता॥ श्राव्यते तैत्तिरीयादौ सर्वेषां भूतभाविनाम् ॥
महानारायणोपनिषदि॥यस्मिन्निद १ सं चविचैति सर्वं यस्मिन्देवा अधिविश्वे निषेदुः॥
तदेव भूतं तदुभव्यमाइदं तदक्षरे परमेव्योमन् ॥ ( अ० १ पा० ४ सू० २३ )

प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्दित्यादि ॥ ६५ ॥

तस्याऽभिन्ननिमित्तोपादानतां प्राह सूत्रकृत ॥

अभेदश्रुतयः सर्वाः सङ्गच्छन्ते न चान्यथा ॥ ६६ ॥

पुमांश्च प्रकृतिःसूक्ष्मतनू इत्यपि नोचितम्॥ यद्वक्ष्यते ब्रह्म तयोरुपादानं लयास्पदम् ॥६७
घटते तेन चिदचिद्वैशिष्ट्यं नैव कारणे ॥ अन्तर्यामिब्राह्मणं न सूक्ष्म तद्देहसाधकम् ॥६८॥
आम्नायतेऽत्र वृत्तान्तः सर्गादुत्तरकालिकः॥तिष्ठन्यमयतीत्येवं वर्तमाने शता च लट्॥६९

---

१ समेतिव्योति च २ जगतःप्रकृतिरुपादानकारणं चान्निमित्तकारणं च ब्रह्मैव एवमेवसतिएक विज्ञानेन सर्वविज्ञानप्रतिज्ञा यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यादित्यादिदृष्टान्तश्च नोपरुध्यते ३ ब्रह्मदेहयोः ४ यः पृथिव्यां तिष्ठन्नित्यादिवाक्येषु

कालान्तरे विभोर्भिन्नं किञ्चिद्व्याप्यं न विद्यते॥सर्वस्य पूर्णब्रह्मत्वात्परिच्छेदाद्यऽभावतः
पृथ्व्यादीनामानर्हं च तादृग्रूपानुपाश्रयात् ॥ यंतव्याभावतस्तत्र नियमोऽपि न युज्यते ॥७१
सृष्टिकाले समुद्भूतं भूतप्राणेन्द्रियादिकम् ॥ जीवाश्च तत एवात्र ये शरीरतयोदिताः ॥७२

तैत्तिरीयब्रह्मोपनिषदि॥तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः॥
आकाशाद्वायुरित्यादि॥मुण्डकोपनिषदि द्वितीयमुण्डकप्रथमखण्डे ॥
एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च खं वायुर्ज्योतिरापः
पृथिवी विश्वस्य धारिणीत्यादिषु ॥ अनेकत्र स्फुटमिदं शास्त्रे मीमांसितं तथा ॥
आचार्येणान्त्ययोः सम्यग् द्वितीयाध्यायपादयोः ॥ ७३ ॥
इदानिमैच्छिकाद्भेदाद्रूपनामविभागतः ॥
स्वात्मकस्य पृथिव्यादेः सतम्याधारतोचिता ॥ ७४ ॥

---

१ प्रपञ्चस्य व्याकृतनामरूपतया स्थित्यधिकरणकालातिरिक्ते २आदिशब्दादानन्दांशतिरोभावादीनांसङ्ग्रहः ३ ब्रह्मकर्तृकः अन्तर्यामिब्राह्मणे ४ ब्रह्मसूत्रेषु ५ व्यासेन ६ तृतीयचतुर्थयोः ७ अयमैच्छिकभेदे हेतुः भेदश्चाधाराधेयभावे ८ यः पृथिव्यां योप्सु इत्यादिरूपया

तत्र व्याप्य स्थितः कृत्स्नेप्रेरणार्थं नियामकः ॥ अनुप्रविष्टः सृष्ट्वेदं मरणाय न लिप्यते ॥
तत्सृष्ट्वा तदेवानुप्राविशच्छ्रुतितः स्मृतेः॥ यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥७६
तैत्तिरीये नारायणप्रश्ने ॥ अतः समुद्रा गिरयश्चसर्वेऽस्मात्स्यन्दते सिन्धवः सर्वरूपाः ॥
अतश्च विश्वा ओषधयो रसाश्चयेनैष भूतस्तिष्ठत्यन्तरात्मा॥आनन्दादितिरोभावात्क्रीडनार्थं
पृथक्कृताः ॥ जडा जीवाश्च निःसङ्गत्वान्तास्थितमधोऽक्षजम् ॥ ७७ ॥
तदिच्छया न जानन्तीति न वेदेति भण्यते ॥ शरीरमिति भेदस्तु सृष्टिकालेऽपि लुप्यते ॥
पृथ्व्यादीनां त्वन्मतेऽपि स्थूलानामेव वर्ण्यते ॥ शरीरतान्नेति तेन न सूक्ष्मे सिध्यतस्तनू ॥
भवत्को सूक्ष्मदेहौ चेद्वेदादिमायगोचरौ॥ तदा यश्चिति तिष्ठन्यो चितितिष्ठन्निति द्वयम्॥

१ सर्वस्य जीवनार्थं कोह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो नस्यादिति श्रुतेः २ गीतावाक्यात् ३ प्रथमार्थे पञ्चमी क्वचित् रसाश्चेतिपाठात् ४ आदिशब्दादैश्वर्यादीनां जडे चिदंशस्य च तिरोधानम् ५ अधस्तादक्षजं यस्मात्तम् इन्द्रियजन्यज्ञानाविषयम् ६ ब्रह्मेच्छया ७ शरीरत्वकथनेन ८ त्वयास्थूलत्वेनाभिमतानां पृथिव्यवाग्निप्रभृतीनाम् ९ अन्तर्यामिब्राह्मणे १० भवदभिमतौ ११ वाक्यद्वयमेव ब्रूयात् न तु पृथिव्यादिवाक्यानि

एवं ब्रूयात्तु नोक्तं तस्मात्तौ श्रुत्यसम्मतौ॥कारणे तेन जीवानामेतन्त्रं त्वन्मतं त्रयम्॥८१॥
याऽऽधारत्वनियम्यत्वव्याप्यत्वैर्दर्शिता भिदा ॥ उपक्रमोपसंहारविचारे सा न वास्तवी ॥
यथोपक्रमे ( पृ० ६१४ ) सोऽब्रवीत्पतञ्जलं काप्यं याज्ञिकांश्च वेत्थ नु त्वं काप्य सूत्रं वियातं
चान्तर्यामिणमिति स ब्रह्मवित्स लोकवित्स देववित्स भूतवित्स आत्मवित्स सर्वविदिति
तेभ्योऽब्रवीत्तदहं वेद ॥ इत्येकस्यैव विज्ञानात्सर्वविज्ञानमीर्यते ॥
सर्वस्य तदुपादानकत्वे सत्येवसम्भवेत् ॥ ८३ ॥
एकमृत्पिण्डविज्ञानाद्विज्ञातं स्यात्तु मृन्मयम् ॥ एकेन लोहमणिना सर्वं लोहमयं यथा॥ ८४॥
उपसंहारे ( पृ०६२२) अदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता नान्योऽतोऽ
स्ति द्रष्टानान्योऽतोऽस्ति श्रोता ॥ नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञातैष त
आत्मान्तर्याम्यमृतइति ॥ कर्तारो दर्शनादीनां जीवाः स्वांशतयाऽखिलाः ॥
ब्रह्माऽभिन्ना विस्फुलिङ्गवदित्येवेह बोत्ध्यते ॥ ८५ ॥
न चेत्तादृग्जीवसत्त्वान्नोपपद्येत तात्त्विकः ॥ सेधो द्रष्ट्रन्तरादीनां तस्मात्सर्वं तदात्मकम् ॥

---

१ तादृशं वाक्यद्वयं तु नैवोक्तम् २ श्रुतेरनिराक्षितम् ३ अनौपचारिकः ४ निषेधः

सृष्टिकाले परिच्छेदो भेदोऽचेत्थं विभक्तता ॥ अनुप्रवेशो नियमो न पूर्वापरकालयोः ॥
इदानीमेवेदमत एकदेश्येव तन्मतम् ॥ तदावरणभङ्गेऽपि दर्शितास्यैकदेशिता ॥ ८८ ॥
ननु सर्वमतान्येवं दूषयन्द्वेषकृद्भवान् ॥ इति चेन्न विनोदोऽयं विदुषां तत्त्वनिर्णये ॥ ८९॥
भक्तिज्ञाने यत्र विष्णोर्यत्र वेदः परा प्रमा॥मतानि तानि सर्वाणि जीवोद्धारस्य हेतवः॥९०॥
सत्त्वादिभेदतो जीवांश्चित्रप्रकृतयोऽखिलान्॥ उद्धर्तुं प्रभुणा नाना सम्प्रदायाः प्रकाशिताः
यथाऽधिकारं तेष्वेते प्रवर्तन्ते ततः फलम् ॥ ऐहिकामुष्मिकं मोक्षो विविधश्च यथायथम् ॥
ब्रह्मण्यलौकिकेऽचिन्त्ये स्वाभिन्नानन्तशक्तिनि ॥ तद्रूपस्य व्यवस्थानमभेदाच्छ्रुतिपूदितम्

वितरतियत्स्वयमगुणं विविधेभ्यः कामना नाना ॥
सगुणैः शिवादिरूपैस्तदंशिभूतं भजे परं ब्रह्म ॥ ९४ ॥

इतिश्रीमद्वल्लभाचार्यमतवर्ति श्रीव्रजवल्लभचरणानुचरगवनदीघनश्यामभट्टात्मजगोवर्द्धनशर्मकवेः
कृतौ वेदान्तचिन्तामणौ विशिष्टाद्वैतविचारो नामैकादशं प्रकरणम् ॥ ११ ॥ ॥

१ तत्तस्मात् अथवा यस्य यःसर्वत्रेति श्लोकस्य व्याख्यानभूते २ निर्णयनिमित्तम् ३ सम्प्रदायेषु ४ तदभिन्नस्य प्रपञ्चस्य

## ॥ अथ द्वादशं प्रकरणम् ॥

लीलार्थे शिवशक्त्याद्याः कृता येन त्रिभूतयः ॥ नैर्गुण्यहेतुं भक्तानां नमामो निर्गुणं परम् ॥

शैवा रामानुजमततस्कराः सर्वत्राल्पमयम् ॥ योजयित्वा शिवपरं विशिष्टाद्वैतमेरयन् ॥ २ ॥

निर्गुणं स्यात्परं ब्रह्म श्रुतेर्निर्गुणसूक्तिकृत् ॥शम्भोस्तमः प्रधानस्य ब्रह्मत्वं न तथोचितम् ॥

निर्गुणः स्यात्परशिवो व्यूहादिस्थो गुणीति चेत्॥न सूतसंहितादौ वः सगुणः सोऽपि कथ्यते

निर्गुणः स्यात्परशिवो व्यूहादिस्थो गुणीति चेत् ॥ ब्रह्मविष्णुमहेशानैरुपास्यः परमेश्वरः ॥ ५ ॥

उमार्द्धविग्रहः श्रीमान्सोमार्द्धकृतशेखरः ॥ ब्रह्मविष्णुमहेशानैरुपास्यः परमेश्वरः ॥ ५ ॥

ऋतं सत्यं परं ब्रह्म पुरुषं साम्बमीश्वरम् ॥ अष्टमे नवमेऽध्याये तन्महोपनिषत्स्फुटम् ॥ ६ ॥

महेशानोपास्यलिङ्गाद्वाक्ये परशिवः स्फुटः ॥ साहित्यात्सर्वदा शक्तेः सगुणत्वं दृढीकृतम्

शक्तेः परस्वरूपेऽपि तद्रहस्ये निरूपितम् ॥ सर्वस्याद्या महालक्ष्मीस्त्रिगुणा परमेश्वरी ॥

१ नीलकण्ठादयः २ ब्रह्ममीमांसाभाष्यशिवतत्त्वविवेकलिङ्गार्चनचन्द्रिकादिषु ३ श्रुतितः
४ चरमकोटिकं विभुतित्वेन तूचितमेवेतिभावः ५ अष्टमाध्यायस्थमिदम् ६ नवमाध्यायस्थमिदम्
७ तान्त्रिकोयं रहस्यभागः सप्तशतीपाठोत्तरम्पठ्यमानः प्रसिद्धः ८ त्रिगुणात्मकत्वमुक्तम्

( स्कन्ध १० ) शिवः शक्तियुतः शश्वत्त्रिलिङ्गो गुणसंवृतः ॥
वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा ॥ ९ ॥
ततो विकाराअभवन्षोडशामीषु कञ्चन ॥ उपधावान्विभूतीनां सर्वासामश्नुते फलम्॥१०॥
हरिर्हि निर्गुणः साक्षात्पुरुषः प्रकृतेः परः ॥ स सर्वदृगुपद्रष्टा तं भजन्निर्गुणो भवेत् ॥ ११ ॥
श्रीमद्भागवतेऽप्युक्तं सगुणत्वं शिवस्य तु ॥ वैष्णवानां यथा शम्भुर्भक्तः परशिवःपरम् १२
व्यूहवर्ती तु संहारशक्तिकार्ये निरूपितः ॥ तत्पाद्मब्रह्मवैवर्तपञ्चरात्रादिवाक्यतः ॥१३॥
अनेकैर्वेदभागैश्च मयाऽन्यत्र प्रपञ्चितम् ॥ कृष्ण एव परं ब्रह्म सदानन्दस्तथा श्रुतिः १४
कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ॥ तयोरैक्यं परं ब्रह्म कृष्ण इत्याभिधीयते॥१५
शिवादिरूपैः सगुणैः कामान्प्रयाति प्रभुः ॥
स्वयं तु निर्गुणो देवो भक्तानां निर्गुणत्वकृत् ॥ १६ ॥
( स्कन्ध १० ) उत्तरार्द्धे ॥ यस्याङ्घ्रिपङ्कजरजोऽखिललोकपालैर्मौल्युत्तमैर्धृतमुपासिततीर्थतीर्थम् ॥ ब्रह्मा भवोऽहमपि यस्य कलाः कलायाः श्रीश्चोद्वहे न चिरमस्य नृपासनं क १७

त्वामेवान्ये शिवोक्तेन मार्गेण शिवरूपिणम् ॥
( स्कन्ध १० ) पूर्वार्द्धे ॥
श्रीमद्भागवतेऽस्येति भगवद्रूपता मता ॥ १८ ॥
येऽप्यन्यदेवताभक्ता इतिगीतासु चोदितम्॥ पाद्मे कार्तिकमाहात्म्ये प्रथमाध्याय ईर्यते १९
( श्लो० २६ । २७ ) सौराः शैवाश्च गाणेशा वैष्णवाः शक्तिपूजकाः ॥
मामेव प्राप्नुवन्तीह वर्षाम्भः सागरं यथा ॥ २० ॥
एकोऽहं पञ्चधा जातः क्रीडया नामभिः किल॥ देवदत्तो यथा कश्चित्पुत्राद्याह्वाननामभिः॥
इत्थं भगवता प्रोक्ता शिवादीनां निजांशता ॥
शिवादिरूपं शैवाद्या भजन्तः प्राप्नुवन्ति तम् ॥ २२ ॥
विष्णुः सत्वगुणोपाधिस्तद्भक्ता इह वैष्णवाः ॥ शम्भोरुपासनं चक्रे आसुरान्मोहयन्कचित्॥
उत्तरोत्तरसर्वार्थं तत्पाद्मे स्पष्टमुच्यते ॥ विष्णोर्नामसहस्रे तु शिवेन गिरिसां मति ॥ २४॥

१ भगवन्तम् २ सौराः शैवा इति पाद्मवाक्ये पञ्चायतनोपासकनिरूपणेन साहचर्यात्सगुणोपासका एव वैष्णवा बोध्या न तु पुरुषोत्तमोपासकाः ३ ननु रामाद्यवतारेषु भगवता शिवभक्तिकरणात् सेव्यसेवकभावविपर्यय एव कुतोनेत्याशङ्क्याह शम्भोरिति ४ भगवान् कारान्

मादायामरशक्तानां ... पाधिधारिणाम्॥त्रयाणामागता तत्रैत्यस्या...
मुख्यत्वेन गुणाश्चांशाः ... प्रकृतेरपि ॥
कार्य्याणि कार्य्यरूपायां शक्तीनां प्रकृतेरपि ॥
कार्य्याणि कार्य्यरूपायां शक्तीनां प्रकृतेरपि ॥ ३७ ॥

ततोऽस्यामुपचर्यन्ते माहात्म्यख्यातये क्वचित् ॥ ३७ ॥
उक्तं द्वितीयेऽध्याये ततसप्तशत्याः समोहितः॥प्रथमाध्यायवृत्तान्तस्तट्टीकायां मया पुनः
देवीसूक्ते स्वमाहात्म्यं देव्येवोक्त्वा ततो मम ॥
योनिरप्स्वन्तः समुद्र इत्युक्ता हरिकार्य्यता ॥ ३९ ॥
तस्मात्सृज्यतया नैव घटतेऽस्या निमितता॥शक्तिमत्पारतन्त्र्यं च शक्तित्वाद्धृदयोदितम्

१ रमणार्थमात्मानं भक्तुमिच्छता नानारूपं चिकीर्षतेतियावत् २ कार्येषु ३ ब्रह्मणा ४ सर्वाः
स्वालौकिकशक्तीः ५ स्वशक्त्यंशाः ६ दुर्गां ७ ब्रह्मविष्णुमहेश्वराणाम् ८ देव्याम् ९ इदमुत्तरा
ण्वपि १० ऋग्वेदप्रसिद्धे ११ ब्रह्मरुद्रोत्पादकत्वादिरूपम् १२ इदं ...पदं ... नेनान्वेति १३
अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुतमानुषेभिरित्यादिनोक्त्वा

तन्नात्र विस्मयः कार्यो योगनिद्रा जगत्पतेः ॥ महामाया हरेश्चैषा तया संमोह्यते जगत् ॥
इत्युक्तं प्रथमाध्याये तथा नारायणीस्तवे ॥ या देवी सर्वभूतेषु विष्णुमायेति कथ्यते ॥४२
परत्वं तत्र शक्तित्वाभिप्राणेय निरूपितम् ॥ त्वयेति करणं ज्ञेयं शक्तेर्ना कर्तृतोचिता ॥
विसृष्टौ सृष्टिरूपा त्वं स्थितिरूपा च पालने ॥ तथा संहृतिरूपान्ते जगतोऽस्य जगन्मये॥
जगन्मये भगवति त्रिधा शक्तिस्तु या स्थिता॥तद्रूपा त्वामिति स्तुत्या त्वयेति करणं ध्रुवम्
समवायि निमित्तं च ब्रह्मैव श्रुतिसंभतम् ॥ विभूतीनां च माहात्म्यं ब्रह्ममाहात्म्यबोधकम्
राज्ञः स्तुतावमात्यादिप्रशंसापर्यवस्याति ॥ स्तुतः क्वचित्पुराणेषु तत्तद्रूपस्ततो हरिः ॥ ४७
आकाशात्पतितं तोयं यथा गच्छति सागरम् ॥ सर्वदेवनमस्कारः केशवं प्रतिगच्छति॥४८
ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ॥ इत्यादौ फलदः पूज्यस्तत्तदंशी स एव हि ॥
पूर्वोक्तपाञ्चवाक्येऽपि स्फुटा भगवदंशता ॥ तन्त्रशास्त्राण्ययुक्तानि मोहनाय कृतानि यत्
अतस्तदनुसारेण मद्यं मांसं च मैथुनम् ॥ मन्त्राना उत्तमं कौलाऽऽद्या यान्ति यमयातनाः
तच्छाक्तकिरणे तन्त्रकिरणेऽन्यत्र दुर्गतम् ॥ दुर्गापाठविवृत्त्यादौ विस्तराद्दूषितं मया५२



१ त्वयैतद्धार्यत इति वाक्ये २ सप्तम्यन्तमिदम् ३ सौराशैवा इति वाक्ये

तस्मात्तदद्वयं ब्रह्म लीलायै भाविंतद्द्वयम् ॥ विमोहश्चास्य सम्भ्रान्तेरशक्यं ज्ञातुमासुरैः ॥
दैवाभजन्तु तत्स्वाचार्योक्तभक्त्या परात्परम् ॥ सदानन्दं वेदरत्या न भ्रमं तु च मोहकैः
रूपेऽक्षरे पदे योऽध्यात्म्ये क्रीडति सदा स्वरूपेण। अधिभूतक्षरकर्त्ता पुरुषोत्तममाधिदैविकं वंदे

इति श्रीमद्वल्लभाचार्यमतवर्ति श्रीव्रजवल्लभचरणानुचरपञ्चनदीघनश्याममहात्मजगोवर्द्धनशीघ्रकवेः कृतौ वेदान्तचिन्तामणौ शैवशाक्तमतविचारो नाम द्वादशं प्रकरणम् ॥ १२ ॥ ॥ ॥ ॥ ॥

## ॥ अथ त्रयोदशं प्रकरणम् ॥

वल्लवीवल्लभो नाना धामन्यक्षरनामनि ॥ कलयँल्ललिता लीलाः सदासस्ताद्नुग्रही ॥ १ ॥
अधिदैवादिभेदेन ब्रह्मणोऽस्ति त्रिरूपता ॥ क्षरोऽक्षर इति द्वेधा तथाद्यः पुरुषोत्तमः ॥२॥
पूर्णानन्दमयाकारः सर्वाकारानुभावनः ॥ सच्चिदानन्दरूपोऽसत्पदार्थास्पष्टविग्रहः ॥ ३ ॥

---

१ स्वरूपभूते २ अक्षराख्ये ३ स्वधाम्नि ४ गोपीप्रियः ५ त्रिविधाः इदं लीलाविशेषणम् ६ सदेति पृथक्पदम् दाससहितइति वा अस्मिन् पक्षे एतत्तदोः सुलोपइत्यस्याप्रवृत्तावपि खर्परे शरि वा विसर्गलोपोवक्तव्य इति तल्लोपः ७ पूर्णत्वं अक्षरवद्गणनाशून्यत्वमानन्दे

अलौकिकीभिः स्वाभिन्नाभिर्नित्यानन्तशक्तिभिः ॥
स्वाभाविकीभिरपराहतकार्य्याभिराश्रितः ॥ ४ ॥
विरुद्धसर्वधर्माणामेकाधारोऽविरोधतः ॥ अप्राकृताखिलगुणो निर्गुणोऽविकृतो विभुः॥५
नित्यः पूर्णोऽव्ययो व्याप्त एक एकरसः सदा ॥ ज्ञेयः कृष्णः परं ब्रह्म प्रमासु पुरुषोत्तमः॥
अन्यत्तस्याक्षरं रूपं सच्चिदानन्दमात्रकम् ॥ तद्रूपं गणितानन्दं पूर्णानन्दो हरिः स्वयम् ॥
सैषानन्दस्य मीमांसा भवतीत्यादिना श्रुतौ॥विध्यानन्दाच्छतगुणोऽक्षरानन्दो हि गण्यते
आनन्दमात्रकरपादमुखोदरता हरेः ॥ तदानन्दमयोऽभ्यासादिति सूत्रे समर्थितम् ॥९॥
अन्ये तु भगवद्धर्माः सर्वे तत्र हरीच्छया ॥ आविर्भावतिरोभावशालिनः क्रीडनास्पदे ॥१०
व्याप्तोऽक्षरः स्वयं व्याप्तो व्याप्तिर्दुग्धाम्बुवद्द्वयोः॥उभे अपि यथैकस्मिन्कलशे व्याप्य तिष्ठतः

---

१ सत्त्वादिगुणत्रयरहितः २ वेदादिप्रमाणेषु ३ पुरुषोत्तमस्य ४ अक्षराख्यम् ५ शारीरादिसर्वसुखोपेतचक्रवर्त्यानन्दापेक्षया सहस्रगुणितपरार्द्धगुणानन्दम् ६ श्रुतौब्रह्मवल्ल्याम् ७ प्रजापत्यानन्दात् ८ पुरुषोत्तमस्य ९ यतोवाचइतिश्लोके वाङ्मानसनिवृत्तिकथनात्तदानन्दे वाग्विषयगणनाराहित्यमित्यादि १० अक्षरे

यथेक्षुरसयोः सर्पिर्दध्नोश्च तिलतैलयोः॥ अलोकोव्यापिवैकुण्ठः क्वचिद्गोलोक इत्यपि॥१२
तदेव परमं व्योम परं धाम परं पदम्॥ अक्षरं बृहदव्यक्तं पर्यायैः परिकीर्त्यते॥ १३॥
परमात्मा परं ब्रह्मेत्यादिभिः पुरुषोत्तमः॥ वस्तु स्फुटीकृतं वेदादौ तद्रूपं तथा स्मृतिः॥१४॥
अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्॥ यद्गत्वा न निवर्त्तन्ते तद्धाम परमं मम॥
पुरुषः सपरः पार्थ भक्त्या लभ्यस्त्वनन्यया॥इत्युक्तो भक्त्यैकलभ्योऽग्रे परः पुरुषोत्तमः
तदास्थाय निजं धामेच्छानुरूपविधायकम्॥लीला नित्याः स्वयं शुद्धा अनिरुद्धा दधातिवै
अनागन्तुकधर्म्मत्वात्तल्लीलास्त्वविलासाश्च॥ न शुद्धाद्वैतबाधः स्यादभेदाद्धर्मधर्मिणोः॥
ननु चेदक्षरं नित्यं नित्यश्च पुरुषोत्तमः॥ भेदः स्याद्वास्तवो द्वैतं न चेन्न्यूनोऽक्षरःकथम्

---

१ अत्र तिलेषु तैलं दधनीवसर्पिरित्यादिश्रुत्यनुग्रहोपि द्रष्टव्यः २ पश्यतां सर्वलोकानाम लोके समपद्यतेतिभागवतादौ ३ बृहद्वामनपञ्चरात्रादिषु ४ अक्षरब्रह्मैव ५ तदक्षरे परमे व्योमन् ऋचोअक्षरे परमे व्योमन् प्रतिष्ठिताइत्यादिश्रुतिषु ६ अव्यक्तोक्षरइत्युक्त इतिगीतादौ ७ तयोरैक्यं परं ब्रह्म उत्तमपुरुषस्त्वन्यः परमात्मेत्युदाहृतः ब्रह्मेतिपरमात्मेत्यादिश्रुतिस्मृतिपुराणेषु ८ पर्यायैः ९ मुण्डकाद्युपनिषत्सु १० गीतावाक्यम् ११ अक्षरम् १२ पुरुषोत्तमः

इति चेन्न हरिर्यत्र प्रियमोदः प्रमोदवान् ॥ आनन्दात्मा पक्षिरूपस्तैत्तिरीयेषु पठ्यते॥२०॥
ब्रह्म पुच्छं प्रतिष्ठेति पुच्छं तत्राक्षरं श्रुतम् ॥ न पुच्छं पक्षितो भिन्नं नाक्षरं पुरुषोत्तमात् ॥
सर्वावयववान्पक्षी स्वतन्त्रः पुच्छतोऽधिकः॥पुच्छं त्ववयवत्वेन न्यूनं भेदो न वस्तुतः॥२१॥
अल्पधर्मकमेकांशभूतं न्यूनं तथाक्षरम्॥सर्वधर्माश्रयः सोऽस्मादंशभूतोऽधिकःश्रुतः॥२३॥
न भेदो भगवत्सच्चिदानन्दात्माऽक्षरोऽपि यत् ॥ पुच्छं पक्षिपदार्थान्न विभक्तमिह तत्तथा ॥
अतोऽक्षरस्य चरणत्वमपि क्वचिदुच्यते ॥ प्रतिष्ठेति पदात्तस्य प्रोक्तैवोत्तमधामता ॥ २५ ॥
स्वाभिन्न एकांशभूते सच्चिदानन्दधामनि ॥ आत्मतन्त्रः सर्वधर्मा सर्वदा रमते विभुः ॥२६॥
भागवते ( स्कन्ध २ ) नमो नमस्तेऽस्त्वृषभाय सात्वतां विदूरकाष्ठाय मुहुः कुयोगिनाम् ॥
. निरस्तसाम्यातिशयेन राधसा स्वधामनि ब्रह्मणि रंस्यते नमः ॥ २७ ॥
यदा वही रिरंसुः स्यात्स्वरूपादक्षरात्मकात् ॥ तिरोभावेन धर्माणां प्रपञ्चं सृजति क्षरम् ॥
तन्वक्षरमुपादानं निमित्तं पुरुषोत्तमः ॥ तदाऽभिन्ननिमित्तोपादानवादः कथं भवेत् ॥२९॥



१ ब्रह्मपुच्छम् २ अन्योन्तरआत्मानन्दमयः तस्यप्रियमेवशिरइत्यादिना. ३ हृदोपगुह्यार्हं पदं पदे पदे इति भागवतवो

एवं चेत्स्वर्ण चेद्धेमकुटात्तत्पिण्ड उद्धृतः। मृज्येत कटकार्यं स्मात्र कुटं समवायि किम् ॥३०॥
ऊर्णनाभिः सृजञ्जालं लालया स्वांशभूतया ॥ लीलयाऽत्र किं तस्योपादानं स भविष्यति
उपक्रम्याक्षरं ब्रह्म मुण्डकेऽप्याद्यमुण्डके ॥ यद्भूतयोनिं परिपश्यन्ति धीरा इतीर्यते ॥ ३२ ॥

तथाक्षरात्सम्भवतीह विश्वमिति चोच्यते ॥

तथाक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति ॥ ३३ ॥

द्वितीयमुण्डकेऽप्युक्तं तस्मात्सर्वं परात्मकम् ॥ अतः पुरुष एवेदं विश्वं तत्रैव पठ्यते ॥ ३४ ॥
तदाहुरक्षरं ब्रह्म सर्वकारणकारणम् ॥ विष्णोर्धाम परं साक्षात्पुरुषस्य महात्मनः ॥३५॥
तृतीयस्कन्ध एकादशाध्याय इति कारणम् ॥ तदेव जगतो धामास्यं चोक्तं हरिणा तथा ॥
अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ॥ अव्यक्तनिधनान्येव तत्र का परिदेवना ॥

१ सुवर्णपिण्डात् २ सुवर्णराशिस्तत्कटकादेः समवायिकारणं भवत्येव अत एव समवायीति क्लीबप्रयोगः ३ जालस्य एवं चोर्णनाभिवत्परः लालावदक्षरं जालवत्प्रपञ्चः ४ अक्षरस्य पुरुषोत्तमाभिन्नत्वेन जगति पुरुषोत्तमोपादानकत्वानपगमात् ५ द्वितीयमुण्डकप्रथमखण्डसमाप्तौ ६ सर्वस्य जगतः कारणानां पञ्चमहाभूतादीनाम् ७ कारणमित्यनेनान्वेति ८ परस्य ९ अव्यक्तोऽक्षर इत्युक्त इतिवाक्यादक्षरः

अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ॥ रात्र्यागमे प्रलीयंते तत्रैवाव्यक्तसंज्ञके ॥
तस्माद्विश्वं क्षरमिदमाविर्भावितमक्षरात् ॥ क्षरणं तु तिरोभावः क्षरन्त्यन्ते ततः क्षरम्॥
न धाम्नोस्ति तिरोभावः कदाचिदिति सोऽक्षरः ॥ एतावतीतः पुरुषोत्तमो गीतासु रूपितः ॥
द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ॥ क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥४१॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥ यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः॥४२॥
यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ॥ अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥
क्षराक्षरौ तु पुरुषौ ताभ्यामेष यदुत्तमः ॥ लोके वेदे क्रमात्तस्मात्पुरुषोत्तम उच्यते ॥ ४४ ॥
( अ० ४ श्लो० १८ ) न तस्य कालावयवैः परिणामादयो गुणाः ॥
अनाद्यनन्तमव्यक्तं नित्यं कारणमव्ययम् ॥ ४५ ॥
न यत्र वाचो न मनो न सत्वं तमो रजो वा महदादयोऽमी ॥
न प्राणबुद्धीन्द्रियदेवता वा न सन्निवेशः खलु लोककल्पः॥ ४६ ॥

---

१ लये २ क्षरणवत्त्वाद्धेतोः ३ एतिच्छब्देन ४ क्षरातीतत्वेन लोके पाञ्चरात्रादिदर्शने प्रथितः अक्षरादुत्तमत्वेन तु वेदे

न स्वप्नजाग्रन्न च तत्सुषुप्तं न खं जलं भूरनिलोऽग्निरर्कः ॥
संसुप्तवच्छून्यवदप्रतर्क्यं तन्मूलभूतं पदमामनन्ति ॥ ४७ ॥
इति भागवते स्कन्धे द्वादशे वर्ण्यतेऽक्षरम् ॥ तदेव परमं धाम गीतासु बहुरूपितम् ॥४८॥
यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः ॥
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये ॥ ४९ ॥
इत्यादिनाऽऽह प्रणवाभिधेयं स्वपदं हरिः ॥ यदक्षरं तदेवैतत्कठवल्लीषु पठ्यते ॥५०॥
सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति ॥
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत् ॥ ५१ ॥
एतद्ध्येवाक्षरं ब्रह्म एतदेवाक्षरं परम् ॥ एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥५२॥
एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् ॥

---

१ पदं पदनीयं प्राप्यम् २ यत्प्राप्त्यर्थमितीतिशाप्याशयः ३ तुभ्यं नचिकेतसे ४ भगवद्धाम ५ भगवद्धाम्नः प्रणववाच्यत्वं भागवतद्वादशस्कन्धेऽपि प्रसिद्धम् स्वधाम्नो ब्रह्मणः साक्षाद्वाचकपरमात्मन इति ६ ॐकारवाच्यम् ७ क्षरजगदपेक्षया परम् ८ भगवन्निलयः

एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते[1] ॥ ५३ ॥

इति वल्ल्यां द्वितीयस्यां तृतीयस्यां च भण्यते ॥ यः सेतुरीजानानामक्षरं ब्रह्म यत्परम् ॥५४॥

इत्यक्षरं निरूप्यास्य प्राप्य प्राप्योश्च कीर्तने[2] ॥

सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥ ५५ ॥

इत्यन्तेनोदिते[3] तस्मादुत्तमोऽग्रे परः श्रुतः ॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः ॥५६॥

पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ॥ इति श्रुत्युदितो देवो गीतासु बहु वर्णितः

पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ॥

मुण्डकोपनिषद्युक्त्वाऽक्षरं[4] प्रोक्तः परः पुमान् ॥ ५८ ॥

दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः ॥ अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः

इत्यादिना विविच्योक्तौ स्पष्टं तत्र पराक्षरौ ॥ एकस्यैवै[illegible]काद्भेदाच्छुद्धाद्वैतं च दर्शितम्

१ ब्रह्माभिन्नजनेषु यद्वा ब्रह्माख्ये लोके परब्रह्मणो वा लोके २ विज्ञानाविज्ञानादिरूपे ३ कथिते ४ अक्षराव ५ वेदान्तेष्वक्षरशब्दस्य प्रधानारत्वनिरासस्तु ( अ० १ पा० ३ सू० १० ) ४४ अक्षरमम्बरान्तधृतेरित्यधिकरणएवकृताः ६ क्षरात्परं यदक्षरं तस्मादपि परः ७ मुण्डके

पराक्षरविवेकोऽयं कार्यादेस्तारतम्यतः ॥ कठमुण्डकमाण्डूक्यबृहदारण्यकादिषु ॥ ६१ ॥
छान्दोग्यकौषीतकीशावास्यातित्तिरिषु स्फुटः ॥ आम्नायते तैत्तिरीये प्रश्ने नारायणाभिधे ॥
स ब्रह्म स शिवः स हरिः सेन्द्रः सोऽक्षरः परमः स्वराट् ॥ गीतायाम् ( अ० १० श्लो० १२ )
परं ब्रह्म परं धाम पवित्रं परमं भवान् ॥ पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ ६३ ॥

आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ( अ० ११ श्लो० १८ )
त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम् ॥
त्वमव्ययः शाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषो मतो मे ॥ ६४ ॥

तथा ( श्लो० ३७ ) त्वमक्षरं सदसत्तत्परं यत् ॥ एवं वेदैरभेदोऽस्य शुद्धः कृष्णेन कथ्यते ॥
स एवाक्षरांशोऽस्त एकांशे प्रतिपादितः ॥ ६५ ॥
तस्मादेकोऽहमित्यादिनैवकिञ्चन बाध्यते ॥ बहुत्वं तु तिरोभावादिदं नासीत्पुराहि तत्र ॥

१ पुरुषोत्तमः २ अक्षरं च भगवान् ३ पुरुषोत्तमस्य ४ सदसत्परं तथा अक्षरं ततः परश्च त्वमेव ५ अक्षरस्य पुरुषोत्तमेन सहाभेदः ६ पुरुषोत्तमः ७ विष्णुपुराणादौ ८ चिदानन्दादि तिरोभावहेतुकं बहुत्वं

अभयवरदपाणिं सेन्दुकोटीरजूटां वसितसितदुकूला ...
शरच्चन्द्रश्वेतां शशिशकलश्वेतालमुकुटां करैः कुम्भाम्भोजे वरभय...
सुधाधाराकाराभरणवसनां शुभ्रमकरस्थितां त्वां ये ध्यायन्त्युदयति न तेषां पार...
इत्याद्युक्तस्वरूपा या कश्चिद्भक्तस्यैव दृश्यते ॥ सुलभा नाखिलानां सेतिफलं तीर्थरूपतः

आविर्भावी तिरोभावी शोकमोहादिदूषितः
पञ्चावयवप्रपञ्चस्तु रूपं स्यादाधिभौतिकम् ॥ ७७ ॥

यो गीतबहुमाहात्म्यः सकामैर्मोक्षकामुकैः ॥ सेव्यमानश्च फलदो धामाध्यात्मिकमक्षरः॥ पुरुषोत्तमआनन्दाकारः स्यादाधिदैविकः॥भक्तिमात्रेण लभ्यः स भोगमोक्षौ ततोऽक्षरात् श्रद्धालुः सलिलं तीर्थं पश्यन्कल्याणवान्भवेत्॥तथाऽक्षरात्मकं पश्यन्विश्वं ज्ञानी विमुच्यते ( स्कंध १२ अ० ६ श्लो० ३२ ) परं पदं वैष्णवमामनन्ति तद्यन्नेति नेतीत्यतदुत्सिसृक्षवः

---

१ गङ्गालहरी श्लोकोऽयम् २ प्रवाहादौ ३ भक्त्या लभ्यस्त्वनन्ययेत्यादिवाक्यैः ४ अतीत्यतदस्थिरं संसारादिकं अथवा तद्ब्रह्म ततोऽन्यदतत्

विसृज्य दोरात्म्यमनन्यसौहृदा हृदोपगुह्यावसितं समाहितैः ॥ ८१ ॥
इति भागवते विष्णुपुराणे प्रथमांशके ॥ अक्षरात्मकमेतद्धीत्युक्तमन्यत्र च स्फुटम् ॥ ८२
अधिभूतादिभावोऽयमित्थं गीतासु रूप्यते ॥
(अ० ८ श्लो० ३) अक्षरं ब्रह्म परमं स्वभावो ध्यात्ममुच्यते ॥ ८३ ॥
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ॥ ८४ ॥
यो निर्गुणोपि निर्गुणधामापि जगत्ससर्ज सगुणमिदम् ॥
बृहदात्मैक्यादगुणान्कुर्वाणो विजयते वरणसुलभः ॥ ८५ ॥

इतिश्रीमद्वल्लभाचार्यमतवर्ति श्रीव्रजवल्लभचरणानुचरपञ्चनदीघनश्यामभट्टात्मजगोवर्द्धनशीघ्रकवेः कृतौ वेदान्तचिन्तामणौ विशिष्टाद्वैतविचारो नामत्रयोदशं प्रकरणम् ॥ १३ ॥

---

१ नास्त्यन्यस्मिन् अनन्य वा सौहृदमाविर्येषा ते २ यो वेदनिहित गुहायामिति श्रुत्यानुरूपार्थमिदं द्वितीयस्कन्धे तु (अ० २ श्लोक० १८) हृदोपगुह्याहंपदं पदे पदे इतिपाठः अर्हस्य हरेः पदं चरणम् ३ निश्चितं यद्वा अवबद्धं आत्मतयागृहीतम् ४ विष्णुपुराणस्थोऽयं चरणः तदेतदक्षरं नित्यं जगन्मुनिवराखिलमितिपाठश्रीधरस्वामिविष्णुचित्यादिभिर्व्याख्यातः ५ अक्षरब्रह्मणासहजीवस्यैक्यसंपादनात् ६ भगवत्कर्तृकोजीवस्यस्वीयतयाङ्गीकारोवरणं अनेकलभ्यत्वं साधनान्तराऽलभ्यत्वोक्तिपूर्वकं यमेवैषवृणुतेतेनलभ्यइतिश्रावणात्

## ॥ अथ चतुर्दशं प्रकरणम् ॥

नमोऽस्तु ज्ञान्यऽलभ्याय भक्त्यैकसुलभाय यः॥ प्रकृतिं पुरुषं कृत्वा निर्माति सगुणं जगत्॥
सत्त्वं रजस्तम इति त्रिभिर्व्याप्तं जगद्गुणैः॥ जीवाश्च त्रिविधा देवास्त्रयस्तत्तन्नियामकाः॥
ननु स्यान्निर्गुणं ब्रह्म स्वयं धामात्मकं तथा ब्रह्माभिन्नो ब्रह्मकार्यः प्रपञ्चः सगुणः कुतः

अत्रोच्यते गुणा मायाकाया व्यामोहिका हि सा
जीवानां तादृशीर्वृत्तीरात्मकार्यैः करोति तैः॥ ४॥

मायायां ते विलीयन्ते कार्यत्वात्प्रलये गुणाः॥ शान्ता विरतकार्यत्वात्सुप्तवत्तत्र तिष्ठति
सर्गमिच्छति चेद्देवः पुरुषं कुरुतेऽक्षरात्॥ चिद्रूपं तर्ह्यचिद्रूपां जडां च प्रकृतिं पुनः॥ ६॥

---

१ अविज्ञातंविजानतां, क्लिश्यन्तियेकेवलबोधलब्धयेइत्यादिश्रुतिपुराणवाक्यैर्भक्तिरहितशुष्कज्ञानिभिःपुरुषोत्तमो नलभ्यः तेषामक्षरेलयात् २ भक्त्याहमेकया ग्राह्यइत्यादिवाक्यैः ३ ब्रह्मविष्णुशिवाः ४ गुणैः ५ ब्रह्माणि ६ माया

( स्कं० ११ अ० २४ श्लो० २ आसीज्ज्ञानमथो ह्यर्थ एकमेवाविकल्पितम्
यदा विवेकनिपुणा आदौ कृतयुगेऽयुगे ७
तन्मायाफलरूपेण केवलं निर्विकल्पितम् ॥ वाङ्मनोगोचरातीतं द्विधा समभवद्बृहत् ॥८॥
तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका ॥ ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयते
इति भागवते प्राह तदेव भगवान्स्वयम् ॥ तिरोहितचिदानन्दा सदंशात्प्रकृतिर्जडा ॥१० ॥
सत्वं रजस्तम इति प्रकृतेर्नात्मनो गुणाः ॥ प्रकृतिर्गुणसाम्यं स्यादिति भागवतोक्तितः
प्राणां समानानां त्रिगुणानामबाधतः॥ऐक्यं तच्छक्तिमायात्मा जडा प्रकृतिरुच्यते
तिर्ह्यस्योपादानमाधारः पुरुषः परं ॥ यंतोऽभिव्यञ्जकः कालो ब्रह्मतत्त्रितयं त्वहम्

१ द्रष्टा २ अथोशब्दःकार्त्स्न्ये सर्वोऽप्यर्थोदृष्टाद्वितीयब्रह्मलीनस्तदभिन्नएवासीत् ३ कदैवमितिचेत्तत्र कालत्रयमाह यदेति अयुगे युगाभावइति सृष्टिप्राक्काले तथासृष्ट्यारम्भकृतयुगे इदानीमपिब्रह्मभेदविवेकेसतिच ४ उभयविषयानतीतं गोचरंसत्यामितिपाठेतुतद्गोचरंयथाभवतितथा ५ अक्षरं ६ सदंशरूपः ७ कार्यकारणरूपा ८ चिद्रूपः ९ भागवतस्थं भागवतवचनमेतत् ४७
१० ब्रह्मरूपतया नित्यस्यैव जगतआविर्भावहेतुः सृष्टिकालः ११ वस्तुतःप्रकृतिपुरुषकालानामपि ब्रह्मांशत्वात्सर्वं भगवानेव

तद्द्वाराविष्कृतं भूतादिकं तत्सगुणं मतम् ततो महदहं तस्मादिति सांख्ये क्रमः स्मृतः
प्रकृत्या निर्मितत्वेन प्राकृतत्वाद्गुणान्वयात् ॥ धर्म्मान्तरतिरोभावाज्जडमब्रह्म भासते
तस्या अप्यंशभूतत्वाज्जडे ब्रह्मसमन्वयम् ॥ तन्मूलके सदंशेन वक्ति तत्तु समन्वयात् ॥१६
जीवास्तु निर्गुणाः स्वांशा आवृताः प्राकृतैर्गुणैः ॥ सृष्ट्यारम्भे नारदीये पञ्चरात्रे स्फुटं तथा
त्रिविधा जीवसङ्घास्तु देवमानुषदानवाः ॥ तत्र देवा मुक्तियोग्या मानवेषूत्तमा अपि ॥१८॥
मध्यमा मानुषा ये तु सृतियोग्याः सदैव हि ॥ अधमा निरयायैव दानवास्तु तमोलयाः॥१९
श्रुतावपि त्रयः प्राजापत्या इति तदुच्यते ॥ तदन्तः करणादीनि तादृशानि भवन्ति हि॥२०
जीवाःकर्माणि कुर्वन्ति स्वभावात्तद्गुणान्यतः ॥ फलं वाञ्छन्ति तादृक्षं प्राप्य सुख्यंति तत्रैव

१ प्रकृतिद्वारा २ आकाशादि ३ प्रकृतितोमहत्तत्वं ततस्त्रिविधोऽहंकारः ४ न तु श्रुतिसंमतः (अ० २ पा० १ सू० २) इतरेषां चानुपलब्धेरित्यादौ तन्निषेधात् ५ प्रकृतिमूलके जडे ६ श्लोकद्वयमिदं निबन्धेपि सर्वार्थनिर्णये उदाहृतम् ७ सात्विक राजस तामसाः ८ मध्यमलोकेषु भ्रमणम् ९ तत्रैशावरणभङ्गोक्तायाम् १० सात्विकादिजीवानां अंतःकरणेन्द्रियाणि सात्विकादीनि १० स्वगुणानुरूपफलेषु

सत्वाद्युपाधिमादाय विष्णुर्ब्रह्मा शिवस्तथा ॥ तत्तन्नियमनायामूर्तिस्थित्यादिकृतये पृथक्‌·
(स्कन्ध१अ०२श्लो२३) सत्त्वं रजस्तमइति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते॥
स्थित्यादये हरिविरिञ्चिहरेतिसंज्ञाः श्रेयांसि तत्र खलु सत्वतनोर्नृणां स्युः ॥ २३ ॥
चिच्छक्तिः पुरुषो नारायणो ब्रह्मा ततोऽभवत् ॥ब्रह्मादिद्वारकः सर्गः पुराणादौ परिस्फुटः
( स्कं० १ अ० ३ श्लो० १ ) जगृहे पौरुषं रूपं भगवान्महदादिभिः ॥
संभूतं षोडशकलमादौ लोकसिसृक्षया २५
यस्याम्भसि शयानस्य योगनिद्रां वितन्वतः ॥ नाभिन्हदाम्बुजादासीद्ब्रह्मा विश्वसृजां पतिः
गुणा विलीय जायन्ते शून्यवत्प्रकृतौ लये ॥ प्रकृतिर्लीयतेऽव्यक्ते पुरुषश्चं तथा स्थितिः
प्रकृतिः पुरुषश्चोभौ लीयेते परमात्मनि ॥ कदाचित्पुरुषद्वारेत्युक्तः सर्गोऽयमीरितः
नहि लीना गुणा यत्र लीयते प्रकृतिर्यदि ॥ साऽक्षरे सगुणं धाममवेदेवेति चेन्न हि ॥ २९ ॥

---

१ क्रमात्सात्विकादिनियमनाय २ अक्षरे ३ शास्त्रार्थतत्त्वदीपे षोढासर्गेषु प्रकृतिपुरुषद्वार- ४८
कोप्येकः सर्गउक्तः कदाचिच्चाद्दशसर्गेच्छायामित्यमपि सृष्टिर्भवति ३ यस्याम् ४ तदेतिशेषः

जगतः सगुणत्वं तु गुणबन्धोऽनुभूयते ॥न तस्य वश्यमायस्य बन्धगन्धः स्वशक्तिजैः

(स्कं० ११ अ० ११ श्लो० १) बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः ॥
गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धनम् ॥ ३१ ॥

सृष्टावेवोद्भवन्त्येते प्राकृताः सन्ति सल्लयात् ॥ साप्यनुद्भूतरूपा चेत्तत्कार्याणि कुतस्तराम्
किञ्च तत्तद्वृत्तिरूपाः सम्भवन्त्यगुणेव ते ॥ जीवेष्वेव विमूढेषु क्रीडार्थं लिङ्गसंस्तु च॥ ३३
न हि ज्ञानघने नानायुज्यन्ते वृत्तयः परे ॥ गुणानां वृत्तिरूपत्वं सांख्यविद्भिर्विविच्यते॥३४॥

प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः
अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ३५

सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः॥गुरुवरणकमेव तमः प्रदीपवच्चार्थतो वृत्ति ॥
तस्मादचिन्त्यमहिमा भगवान्पुरुषोत्तमः ॥ विरुद्धधर्माधारेऽस्मिन्युक्तं सर्वमलौकिके

१ गुणैः २ सदंशेऽजमानस्य लयात् ३ गुणादीनि ४ गुणाः ५ लिङ्गशरीरम् ६ पञ्चशिखाचार्यकृतार्यास्विदमार्याद्वयम् ७ निरोधः ८ आच्छादनम् ९ तैलवर्त्यादीनामन्योन्यविरुद्धत्वेऽपि यथा संयोगेन दीपाख्यकार्योत्पादकत्वं विशेषवोधस्त्वेतद्व्याख्यायां वाचस्पतिमिश्रकृतसांख्यतत्त्वकौमुद्यां द्रष्टव्यः १० भगवति

( स्कन्ध १ अ० २ श्लो० ३० ) स एवेदं ससर्जाग्रे भगवानात्ममायया 

सदसद्रूपया चासौ गुणमय्याऽगुणो विभुः ॥ ३८

तया विलसितेष्वेषु गुणेषु गुणवानिव अन्तःप्रविष्ट आभाति विज्ञानेन विजृम्भितः॥ ३९ ॥
यथा ह्यवहितो वन्हिर्दारुष्वेकः स्वयोनिषु ॥ नानेव भाति विश्वात्मा भूतेषु च तथा पुमान्
असौ गुणमयैर्भावैर्भूतसूक्ष्मेन्द्रियात्मभिः ॥स्वनिर्मितेषु निर्विष्टो भुङ्क्ते भूतेषु तद्गुणान् ॥४१॥
भावयत्येष सत्वेन लोकान्वैलोकभावनः ॥ लीलावतारानुरतो देवतिर्यङ्नरादिषु ॥ ४२ ॥
इत्युक्तं सर्वमुदितं श्रीमद्भागवतादिषु ॥ श्रुतिप्रसिद्धं तत्सिद्धं शुद्धमद्वैतमुज्वलम् ॥४३॥
चतुष्टये प्रमाणानामविरोधाद्विचारिते ॥ श्रीमदाचार्यसिद्धान्तान्न वर्णोऽप्यन्यथा भवेत् ॥
सर्वप्रमाणविषयः सर्वशक्तिः स्वयं प्रभुः ॥ पूर्णानन्दो रसात्मासौ क्रीडत्यध्यात्मधामानि ॥
यादृशं धाम तत्तत्र यथा क्रीडा यथा हरिः ॥ लीलार्थं तस्य रूपाणि यथा नाना तथाखिलम्
वृहद्वामनसंज्ञेतत्पुराणे खिल्य उत्तरे ॥ ब्रह्मभृग्वादिसंवादे स्पष्टं तदिह लिख्यते ॥ ४७ ॥
ब्रह्मोवाच ॥ पष्टिवर्षसहस्राणि मया तप्तं तपः पुरा ॥ नन्दगोपव्रजस्त्रीणां पादरेणूपलब्धये॥

१ अत्र पूर्वमुक्तम् २ रसो वै स इति ब्रह्मवल्लीश्रुतेः ३ पुराणस्यं किंचिदाख्यानं

तथापि न मया प्राप्तास्तासां वै पादरेणवः ॥ श्रुत्वैतद्ब्रह्मणो वाक्यं भृगुः प्राहाथ सादरम् ॥
वैष्णवानां पादरजो गृह्यते त्वद्विधैरपि ॥ सन्ति ते वहवो लोके वैष्णवा नारदादयः ॥५०
तेषां विहाय गोपीनां पादरेणुस्त्वयापि यत् गृह्यते संशयो मेऽत्र को हेतुस्तद्वद प्रभो
ततो ब्रह्मा भृगुं प्राह चिन्तयित्वा पुरातनीम् ॥ कथां सर्वश्रुतीनां च रहस्यं परमाद्भुतम् ॥५२॥
॥ श्रीब्रह्मोवाच ॥ न स्त्रियो व्रजसुन्दर्यः पुत्र ताः श्रुतयः किल ॥
नाहं शिवश्च शेषश्च श्रीश्च ताभिः समाःक्वचित् ॥ ५३
प्राकृते प्रलये प्राप्ते व्यक्तेऽव्यक्तं गते पुरा ॥ शिष्टे ब्रह्मणि चिन्मात्रे कालमायाद्यगोचरे ॥
ब्रह्मानन्दमयो लोको व्यापिवैकुण्ठसंज्ञकः ॥ निर्गुणोऽनाद्यनन्तश्च वर्तते केवलेऽक्षरे ॥५५॥
अक्षरं ब्रह्म परमं वेदानां स्थानमुत्तमम् ॥ गोलोकवासी तत्रस्थैः स्तुतो वेदैःपरात्परैः॥५६॥
चिरं स्तुत्या ततस्तुष्टः परोक्षं प्राह तान्गिरा ॥

१ यद् ब्रह्मायुःसमाप्तिरूपे २ आविर्भूतेजगति ३ अक्षरम् ४ प्रविष्टे ५ तिगेक्षरे ६ मये ७ के ८ के ९ ऋचोऽक्षरे परमे व्योमन् प्रतिष्ठिता इति तैत्तिरीयश्रुतेः १० अक्षरे स्थितैः ११ आधिभौतिकजगदपेक्षया पराद्आध्यात्मिकादक्षरादप्याधिदैविकत्वेन परः १२ वेदान्

तुष्टोस्मि ब्रूत भो प्राज्ञा वरं यन्मनसीप्सितम् ॥ ५७ ॥ श्रुतयऊचुः ॥
नारायणादिरूपाणि ज्ञातान्यस्माभिरच्युत ॥सगुणं ब्रह्म सर्वेषां वस्तुबुद्धिर्न तेषु नः ५८
ब्रह्मेति पठ्यतेस्माभिर्यद्रूपं निर्गुणं परम् ॥ वाङ्मनोगोचरातीतं ततो न ज्ञायते तु तत् ५९
आनन्दमात्रमिति यद्वदन्तीह पुराविदः ॥तद्रूपं दर्शयास्माकं यदि देयो वरो हि नः ६०
श्रुत्वैतद्दर्शयामास स्वं लोकं प्रकृतेः परम् ॥ केवलानुभवानन्दमात्रमक्षरमव्ययम् ॥६१॥
यत्र वृन्दावनं नाम वनं कामदुघैर्द्रुमैः ॥ मनोरमनिकुञ्जाढ्यं सर्वर्तुसुखसंयुतम् ॥ ६२ ॥
यत्र गोवर्द्धनो नाम सुनिर्झरदरीयुतः ॥ रत्नधातुमयः श्रीमान्सुपक्षिगणसंकुलः ॥ ६३ ॥
यत्रानिर्मलपानीया कालिन्दी सरितां वरा ॥ रत्नबद्धोभयतटी हंसपद्मादिसंकुला ॥६४॥
शश्वद्रासरसोन्मत्तं यत्र गोपीकदम्बकम् ॥ लसत्कदम्बमध्यस्थः किशोराकृतिरच्युतः ६५
दर्शयित्वेति च प्राह ब्रूत किं करवाणि वः ॥

---

१ अशेषाणां नोऽस्माकम् २ निर्गलितवस्तुत्वबुद्धिः ३ गिरिरितिशेषः ४ सुपदं काकादि व्यावृत्तये ५ नानारा ६ समूहः ७ कदम्बवृक्षाः वस्तुतस्तु गोपीवृन्दम् तत्कदम्बकमध्यस्थ इत्यपि पाठः

दृष्टो मदीयो लोकोऽयं यतो नास्ति परं वरम् ॥ ६६ ॥ श्रुतयऊचुः ॥
कोटिकंन्दर्पलावण्ये त्वयि दृष्टे मनांसि नः ॥ कामिनीभावमासाद्य स्मरक्षुब्धान्यसंशयम्
यथा त्वल्लोकवासिन्यः कामं तत्त्वेन गोपिकाः ॥
भजन्ति रमणं मत्वा चिकीर्षाऽजनि नस्तथा ॥ ६८ ॥
श्रीभगवानुवाच ॥ ॥ दुर्लभो दुर्घटश्चैव युष्माकं सुमनोरथः ॥
मयानुमोदितः सम्यक् सत्यो भवितुमर्हति ॥ ६९ ॥
आगामिनि विरश्चौ तु जाते सृष्ट्यर्थमुद्यते ॥ कल्पं सारस्वतं प्राप्य व्रजे गोप्यो भविष्यथ
पृथिव्या भारते क्षेत्रे माथुरे मम मण्डले॥वृन्दावने भविष्यामि प्रेयान्वो रासमण्डले॥७१॥
जारधर्मेण सुस्नेहं सुदृढं सर्वतोऽधिकम् ॥ मयि संप्राप्य सर्वेऽपि कृतकृत्या भविष्यथ ॥
ब्रह्मोवाच ॥ ॥ श्रुत्वैतच्चिन्तयन्त्यस्ता रूपं भगवतश्चिरम् ॥
उक्तकालं समासाद्य गोप्यो भूत्वा हरिं गताः ॥ ७३ ॥

---

१ कन्दर्पकोटीति- क्वचित् २ यथेच्छम् ३ भक्तिलक्षणं माहात्म्य ज्ञान पूर्वस्तु सुदृढः सर्वतो-धिकः स्नेहो भक्तिरिति प्रोक्त इति पंचरात्रोक्तेः

स्त्रियो वा पुरुषाश्चापि तद्भावेनैव केशवम् ॥
हृदि कृत्वा गतिं यान्ति श्रुतीनां[1] नात्र संशयः ॥ ७४ ॥
तासां पादरजः स्तुत्यं नित्यं वृन्दावने भुवि ॥
तत्प्राप्य तत्कामनया[2] यान्त्यहो गोपिका गतिम् ॥ ७५ ॥
नन्दगोपव्रजस्त्रीणामतः पादरजो मया ॥
वाञ्छितं पुत्रकाः सम्यग्यद्वि ताः श्रुतयो मताः ॥ ७६ ॥
श्रुत्वैतदृषयो वाक्यं ब्रह्मणः परमेष्ठिनः ॥
सर्वात्मना प्रपन्नास्ते श्रीगोपीजनवल्लभम् ॥ ७७ ॥
इत्युक्तमुत्तरे खिल्ये बृहद्वामनसंज्ञके ॥
प्रभुपादादिभि[3]रिदं संगृहीतं सनिर्णयम् ॥ ७८ ॥
ऋगादीनामुपनिषत्सु पृथङ्नामपूर्वकम् ॥

१ श्रुतिरूपाद्रि गोपीनाम् २ पुरुषोत्तमप्राप्तिकामनया ३ गोपालभट्टादिकृतबहिर्मुखध्वंसादिषु संगृहीतत्वादादिपदम्

तंत्रत्यं वर्ण्यते सर्वं तोद्रूप्यादभिदोदिता ॥ ७९ ॥
भाष्यादौ श्रीमदाचार्य्यैर्दर्शितं प्रभुभिस्तथा ॥
तन्नित्यलीलावादादावन्यत्रान्यैस्तदीक्ष्यताम् ॥ ८० ॥
तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ॥
दिवीवचक्षुराततम् ॥ ऋग्भिर्निरूपितेधाम्न्यात्माऽभिन्नेऽचिन्त्यधर्मवान् ॥
सर्वात्मकः सर्वलीलो नित्यभक्तैर्निजात्मभिः ॥ ८१ ॥
अखण्डः पूर्ण एवासौ रमते स समं सदा ॥भक्त्येकलभ्यो भगवान्नान्यथा दृश्यते परः ॥
इत्यतश्यं सेवनीयः परमान्दसिद्धये ॥ स्वाभाविककृपाशक्तिर्जीवैःसेवार्थनिर्मितैः ॥८३ ॥
यत्तेनरचिता देवाः सेवनायैव चेतनाः ॥ दासभूतो हरेरेवेति पाद्मे जीवलक्षणम् ॥ ८४ ॥
जीवाः स्वांशा यतः सृष्टा मोक्षेऽप्यक्षररूपिणः ॥
अतोऽपि भजनं युक्तं यो यदंशः स तं भजेत् ॥ ८५ ॥
इतिश्रीमद्वल्लभाचार्यमतवार्ति श्रीव्रजवल्लभचरणानुचरपञ्चनदीघनश्यामभट्टात्मजगोवर्द्धनशीघ्रकवेः
कृतौ वेदान्तचिन्तामणौ विशिष्टाद्वैतविचारो नामैकचतुर्दशं प्रकरणम् ॥ १४ ॥

१ भगवद्धामवृत्तम् २ तत्रत्यवस्तूनां साक्षाद्भगवद्रूपत्वात् ३ वाक्यमिदम्

## ॥ अथ पञ्चदशं प्रकरणम् ॥

सर्वात्मार्पणतः सेवारसैर्मुक्त्यधिकैः कृतः ॥
स्वाचार्यैः सुलभो यः स श्रीकृष्णः शरणं मम ॥ १ ॥
ननु तां गोपिका नित्या नित्यं क्रीडादिकं यदि ॥ शुद्धं द्वैतमिदं जातं शुद्धाद्वैतं कुतः पुनः ॥ २ ॥
नशङ्कनीयमित्येवं शक्तिशक्तिमतोर्हतेः ॥
सूत्रेषुपातितो भेदः सुबोधिन्यां न्यरूपयन् ॥ ३ ॥
आधिदैविकशक्तित्वं तासां कृष्णमुखाश्रयः ॥
वासुदेवोपनिषदि श्रूयते शक्तिरूपता ॥ ४ ॥

गोप्यो नाम विष्णुपत्न्यस्तासां चन्दनमाल्हादनं कश्चाल्हाद एप ब्रह्मानन्दरूपः काश्च-

१ वृहद्वामनाद्युक्ताः २ निरस्तः ३ वेणुगीतादिव्याख्याने पादायमुत्तरत्रान्वयी ४ आथर्वणीयेयमुपनिषद् गोपीचन्दनोपनिषदित्यपि कथ्यते ॐ नमस्कृत्य भगवन्तं नारदः सर्वेश्वरं वासुदेवं पप्रच्छेत्यादि ॥ इयं शंकराचार्याद्यनुसारिभिर्बहुभिर्व्याख्याता भागवततत्त्वभास्करादिषु सर्वसाधारणग्रन्थेषूदाहृता च

विष्णुपत्न्यो गोप्यो नाम जगत्सृष्टिस्थित्यन्तकारिण्यःप्रकृतिमहदहमाद्या महामायाः क
श्च विष्णुः परंब्रह्मैव विष्णुरिति ॥ तत्रैवाग्रे आपो ह वा अग्रे आसन्नित्युपक्रम्य ॥ ताश्चो
पनिपद्वैवस्वतेन्तरे सगुणं ब्रह्म विधिनानन्दैकरूपं पुरुषोत्तमरूपेण मथुरायां वसुदेवस
ह्मन्याविर्भविष्यति ॥ तत्र भवत्यः सर्वलोकोत्कृष्टसौन्दर्यक्रीडाभोगं गोपिकास्वरूपैः ब्र
ह्मानन्दैकरूपं कृष्णं भजिष्यथ ॥ तत्रश्लोकौ ॥ इति ब्रह्मवरं लब्ध्वा श्रुतयो ब्रम्हलोकगाः
॥ कृष्णमाराधयामासुर्गोकुलेधर्मसंकुले ॥ श्रीकृष्णाख्यं परं ब्रह्म गोपिकाःश्रुतयोऽभवन्
एतत्संभोगसंभूतं चन्दनं गोपिचन्दनमिति ॥ भागवते (स्कन्ध १० पू०) ताभिर्विधूत
शोकाभिर्भगवानच्युतो वृत.॥ व्यरोचताधिकं तात पुरुषः शक्तिभिर्यथा ॥ ५ ॥

इति पुंशक्तिवल्लीलाशक्तिभिः सह शंसिता ॥
मूर्त्तिमत्त्वं तु शक्तीनामभाक्ततयेच्छया ॥ ६ ॥
यथा मूर्तिर्न वर्णानांलौकिकानामलौकिके ॥
वेदा यथा मूर्तिधरास्त्रिपृष्ठे तदिदं तथा ॥ ७॥

---

१ भागवतस्थोयमिन्द्रवज्राचरणः २ सत्यलोकादौ

मूर्त्तयोऽङ्कुरदृष्टानां शक्तीनामपि वर्णिताः ॥
तर्ह्याधिदैविकीनां तु तथात्वे को नु संशयः ॥ ८ ॥
( स्कन्ध १० अ० ३३श्लो० १७ ) एवं परिष्वङ्गकराभिमर्शस्निग्धेक्षणोद्दाम विलासहासैः ॥ रेमे रमेशो व्रजसुन्दरीभिर्यथार्भकः स्वप्रतिबिम्बविभ्रमः॥९॥
ते ते भक्तास्तदात्मानो न भिदाऽण्वपि वर्त्तते ॥
इत्यभेदे क्रीडने च दृष्टान्तं शुक उक्तवान् ॥ १० ॥
लीलामात्रैर्धर्मभूतैः कामादिभिरलौकिकैः ॥
अबद्धस्य स्वतन्त्रस्य बाधः सर्वाश्रयस्य तैः ॥ ११ ॥
नाचिन्त्यस्याप्रमेयस्य शुद्धाद्वैतस्य कश्चन ॥
अतो भागवतेऽप्युक्तमात्मारामो व्यरीरमत् ॥ १२ ॥
॥रसो वै स इति श्रुत्या रूपितास्य रसात्मता ॥ सर्वकामः सर्वरस इति धर्म्मत्वमीर्य्यते॥

१ मूर्तिमत्वे २ शिशुप्रतिबिम्बदृष्टान्तम् ३ सर्व कामः सर्व गन्धः सर्वं रस इति छान्दोग्ये पञ्चमप्रपाठके ( खं. १४ ) शाण्डिल्यविद्यायां द्विवारमाम्नातम्

विरुद्धधर्माधारत्वं ब्रह्मत्वमिति लक्षणात् ॥ कामादयो ज्ञानघने भूषणं न तु दूषणम् ॥१४॥
शक्तिशक्तिमतोर्भेदो नैवं शुद्धं तदद्वयम् ॥ तत्रत्येषु तिरोभावो न धर्म्माणां तु वस्तुषु॥
अनीश्वरानप्रकृष्टांस्तिरोहितगुणान्बहून् ॥ यदेच्छति प्रजायेयेति तदा कुरुते जगत् ॥१६॥
ते तिरोभूततद्धर्म्मा बद्धाः संसारमायया ॥ दृढाहंत्वाच्छरीरेऽत्राचिरात्ते क्षणभङ्गुरे ॥१७॥

नाव्येकस्यामिवारोहात्प्रपायामिव संगमात् ॥
वियोक्ष्यमाणेष्वचिरान्मिलितेष्वपुनैव च ॥ १ ॥
तेन द्रव्यादिषु संबन्ध कल्पयित्वा च पण्यवत् ॥
गतागतेषु वित्तेषु ममत्वाच्चिन्तयाकुलाः ॥ १९ ॥

संसक्ता देहगेहादावकृतार्था अतर्पणाः॥बलेन मृत्युना नीताः प्रापिताः पारवश्यतः॥२०॥

---

१ भेदस्यायं निषेधः २ तस्मात् भेदाभावाद्धतोः शुद्धाद्वैतं सिध्यति ३ परधामस्थेषु लीलोपयोगिषु ४ तत्रत्यवस्तुषुत्वित्यन्वयात् लौकिकवस्तुव्यावृत्तिः ५ संसारहेतुभूतया ६ संबन्धद्वारभूतशरीरेण ७ पत्नीत्वपुत्रत्वादिलक्षणम् ८क्रय्यवस्तुष्विवगतागतेषु ९ पुनर्जन्मप्रापिताइत्यग्रेणान्वयः

पुनर्जन्म पुनःसक्तास्तत्रत्येषु गृहादिषु ॥ नीयमानाः पुनस्तेनैं पापपुण्यानुरोधतः ॥२१॥
आपन्ना नरकं स्वर्गं नानोद्विग्ना वृथा मुहुः ॥ क्वचित्सुखं क्वचिद्दुःखं क्वचिन्मोहमुपागताः
एवं परवशाः प्राप्ता जन्ममृत्युपरम्पराम् ॥ व्यूह्यमाना इवौघेन घटीयन्त्रमिव श्रिताः ॥२३॥
जीवाः क्लिश्यन्ति दुःखस्य नाशे पुनरनुद्भवे ॥ तद्भक्तिरेव परमं कारणं हरितोषिणी ॥२४॥
महाभारते नामसहस्रे ॥ न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ॥
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥ २५ ॥
पुरुषोत्तममापन्नो न पुनर्दुःखमाप्नुयात् ॥ प्राप्यो भक्त्यैव स तथा गीताभागवतादिषु ॥
नाहं वेदैर्न तपसा न दानेन न चेज्यया ॥ शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥२७॥
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ॥ ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥२८॥
भक्त्याहमेकया ग्राह्यो भक्त्या लभ्यस्त्वनन्यया ॥

---

१ तज्जन्मभवेषु २ मृत्युना ३ सुखादीनि सत्वरजस्तमोजन्यानि क्रमात् तेषां सुखदुःखमोहस्वभावत्वं सांख्यतत्त्वकौमुद्यादिषु प्रसिद्धम् ४ नाशेऽनुद्भवे च कारणमित्युत्तरेणान्वयः लौकिकोपायैर्नाशेऽपि दुःखस्य पुनरुद्भवो दृष्टइत्युभयग्रहणम्

भक्त्यैव तुष्टिमभ्येति विष्णुर्नान्येन केनचित् ॥ २९ ॥

न दानं न तपो नेज्या न शौचं न व्रतानि च॥ प्रीयतेऽमलया भक्त्या हरिरन्यद्विडम्बनम्

भक्त्या तुतोष भगवान्गजयूथपाय ॥ इत्यादौ भक्तिरेवास्य पुरुषार्थः परो मतः॥

सम्यक्त्वेसिद्धये ज्ञानं साधनं भक्तिसूत्रतः ॥ ३१ ॥

तत्सा मुख्येतरापेक्षितत्वादित्थमुपक्रमात् ॥ ब्रह्मकाण्डं तु भक्तौ तस्यानु

ज्ञानाय सामान्यादित्यंतम॥भक्तेर्ज्ञानादिशेषित्वं वक्ति सम्पूर्णमान्हिकं॥३२॥

पदार्थ एव न ज्ञातो यः सेव्यः स कथं भवेत् ॥

भक्त्यसम्पादकं ज्ञानं केवलं तु विनिन्दितम् ॥ ३३ ॥

(स्कंध १०) ब्रह्मस्तुतौ॥ श्रेयःश्रुतिं भक्तिमुदस्य ते विभो क्लिश्यन्ति ये केवलबोधलब्धये

तेषामसौ क्लेशल एव शिष्यते नान्यद्यथा स्थूलतुषावघातिनाम् ॥ ३४ ॥

---

१ भक्तेर्दार्ढ्यादिसिद्धये २ (अ० १ सू० १०) सामुख्येतिभक्तिरेवमुख्या इतरैर्ज्ञानादि-भिस्तदङ्गितया तस्याएवापेक्षितत्वात् ३ ज्ञानकाण्डन्तु भक्तौ भगवत्स्वरूपानुज्ञापकतयोपयुज्यते या गे इतिकर्तव्यताद्यनुज्ञापकतयापूर्वकाण्डमिव ४ भक्तिमीमांसाप्रथमाध्यायस्य द्वितियमान्हिकम्

प्रथमस्कन्धे नारदः॥ नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरंजनम्॥ प्र. १५
कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणं ॥ ३५ ॥
गीतायां ॥ तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ॥
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ ३६ ॥
योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ॥ श्रद्धावान्भजते यो मां स मे युक्ततमो मतः॥
( अ० १ सू० २३।२४ ) तदेव कर्मिज्ञानियोगिभ्य आधिक्यशब्दात् ॥
प्रश्ननिरूपणाभ्यामाधिक्यसिद्धेः ॥ इति स्मृत्युनुसारेण शाण्डिल्यमुनिनो
दितम् ॥ माहात्म्यबोधके ज्ञाने भक्तिसाधनतोचिता ॥ ३८ ॥
माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः ॥
स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा ॥ ३९ ॥
नारदीये पञ्चरात्रे तस्या लक्षणमीरितम् ॥ ( अ० १ सू० २ ) ५५

१ भक्तेर्योगाद्यपेक्षया मुख्यत्वम् २ शब्दस्तूक्तगीतावाक्यरूपः ३ अर्जुनभगवत्कर्तृकाभ्याम्
४ भक्तिमीमांसाप्रथमाध्याय उक्तम् ५ मुख्यभक्तेः

सा परानुरक्तिरीश्वरे ॥ इत्युक्तं भक्तिसूत्रेषु श्रीमद्भागवते तथा ॥ ४० ॥
( स्कन्ध० २ ) देवानां गुणलिङ्गानामानुश्रविककर्मणाम् ॥
सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या ॥ ४१ ॥
अनिमित्ता भागवती भक्तिस्सिद्धेर्गरीयसी ॥ इति निष्कामतःस्नेहो भक्तिराथर्वणे तथा
भक्तिरस्य भजनं तदिहामुत्रोपाधिनैराश्येन मनःकल्पनमिति ॥
चतुर्विधा भजन्ते मां चतुर्ध्वेत्यधिकारिषु ॥ नं समतोर्थार्थ्यार्त्तश्च ज्ञानी जिज्ञासुरुत्तमः॥
भक्त्या सञ्जातया भक्त्येत्येका भक्तिस्तु साधनम् ॥
फलात्मिका परा भक्तिर्मानसी प्रेमलक्षणा ॥ ४४ ॥
तनुजा वित्तजा सेवा तस्याः साधनमुच्यते ॥

---

१ पुरुषोत्तमे या परानुरक्तिः सा पराभक्तिरितिस्वप्नेश्वरादयो व्याख्यातारः २ गीतायाम् चतुर्विधाभजन्ते मां जनाः सुकृतिनोऽर्जुन ॥ आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभेत्यादि ३ उत्तमतया नाभिमतः सकामत्वात् ४ भागवते ( स्कन्ध ११ अ० ३ श्लोक० ३१ ) भक्त्या संजातया भक्त्याबिभ्रत्युत्पुलकां तनुमिति ५ मानस्याः ६ भागवतादिषु.

सर्वेन्द्रियैः शुद्धभावात्तत्परैः सेवनाऽऽदिमां ॥ ४५ ॥
तदिच्छाप्तैस्स्वसर्वस्वोत्थैस्सेवाविभवैः परां ॥
उभे अपि प्रमाणोक्ते प्रथमं तनुजा यथा ॥ ४६ ॥
ऋग्वेदे ॥ तमुस्तोतारः पूर्व्यं ऋतस्य गर्भं जनुषा पिपर्त्तन ॥
आस्य जानन्तो नामचिद्विवक्तनमहस्ते विष्णो सुमतिं भजामहे ॥ भागवते॥
करौ हरेर्मन्दिरमार्जनादिषु ॥ शावौ करौ नो कुरुतः सपर्य्याम् ॥
वाणी गुणानुकथने श्रवणौ कथायाम् ॥ करौ च तत्कर्मकरौ मनश्च ॥
गृहशुश्रूषणं मह्यं दासवद्यदमायया ॥ आदरः परिचर्य्यायाम् ॥
इत्यादौ प्रथमा प्रोक्ता द्वितीयाप्युच्यते यथा ॥
सर्वलाभोपहरणं पत्रं पुष्पं फलं तथा ॥ ४७ ॥
तज्जन्म तानि कर्माणि तदायुस्तन्मनो वचः ॥



१ तनुजा २ भगवदिच्छयालब्धैः ३ वित्तजा ४ तनुजा ५ वित्तजा ६ भागवतस्थमेतत्
७ पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छतीति भगवद्वाक्यम्

नृणां येन हि विश्वात्मा सेव्यते हरिरीश्वरः ॥ ४८॥

मुकुन्दसेवौपयिकं स्पृहा हि नः ॥ [1]भर्ता सन्प्रियमाणो विभर्त्ति ॥

योगक्षेमं वहाम्यहम् ॥ इत्यागमवरोक्तैस्ते एकीभूय सुदुर्लभाम् ॥

[4]अकृत्यशेषां कुर्वीते देशर्मी प्रेमलक्षणाम् ॥ ४९ ॥

सर्वार्पणात्मवृत्तस्य सेवने प्रेमनिर्मलम् ॥ भवेदेव गुणाम्भोधौ हरौ स्यान्मानसी ततः ॥५०॥

(स्कन्ध० १ )नारदः ॥ एवं प्रवृत्तस्य विशुद्धचेतसस्तद्धर्म एवात्मरुचिः

प्रजायत इति ॥ ( स्कं० ११ ) योगीश्वरः ॥

इत्यच्युताङ्घ्रिं भजतोऽनुवृत्त्याभक्तिर्विरक्तिर्भगवत्प्रबोध इति ॥

अवान्तरे फले द्वे स्तः प्राकुर्व्यफलतोऽन्ययोः ॥

संसारदुःखविलयो बृहदात्मैक्यबोधनम् ॥ ५१ ॥

---

१ तित्तिरिश्रुतिः २ गीता ३ तनुजवित्तजसेवे ४ नास्तिकर्तव्यशेषो यस्याम् ५ श्रवणादिनवविधभक्तिभ्यः पराम् ६ तनुजवित्तजसेवे कुर्वतः ७ फलरूपा मानसी ८ मानसीतः ९ उक्तसेवयोः १० अक्षरब्रह्मणा सहजीवाभेदज्ञानम्

(स्कन्ध ६) चित्रकेतुः ॥ नहि भगवन्नघटितमिदं त्वद्दर्शनान्नृणाम
खिलपापक्षयः॥यन्नामसकृच्छ्रवणात्पुल्कसोऽपि विमुच्यते स सारात् ॥ ५२ ॥
अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ॥
जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकम् ॥ ५३ ॥
मां च योऽव्यभिचारेण भक्तियोगेन सेवते ॥
स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते ॥ ५४ ॥
इत्युक्तो भक्तितो बंधनाशो ब्रह्मात्मबोधनम् ॥
संसारोऽविद्यया शक्त्या कृतः पूर्वं प्रवृत्तये ॥ ५५ ॥
स्वरूपं विस्मरन्मूढोऽन्तः प्राणेष्विन्द्रिये तनौ ॥
क्रमादध्यामतो वेत्ति देवदत्तोऽहमित्यसौ ॥ ५६ ॥
देहसम्बन्धिगेहादौ ममत्वेनानुपश्यति ॥ अहं ममात्मकस्त्वाहं संसार इति कथ्यते ॥ ५७॥

१ द्विविधसेवातः २ सृष्ट्यारम्भे ३ अन्यथा ब्रह्मांशानामित्थं प्रवृत्त्यसम्भवादितिभावः ४ स्वरूपाज्ञानमध्यासचतुष्टयं चेति पञ्चाविद्यापर्वाणि ५ अन्तःकरणे

सर्वात्मना प्रवृत्तस्य सेवनायां निरन्तरम् ॥
देहादीनां तदीयत्वभावनादहंमो हतिः ॥ ५८ ॥
तन्मूलिका तु ममता विहताऽहङ्कृतेर्हतेः ॥
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ ५९ ॥
अविद्यानाश इत्युक्तो भक्तानां स्वप्रपत्तितः ॥
संसारकारणलयात्र तस्य पुनरुद्भवः ॥ ६० ॥
अविद्याकालकर्मादि नैव शक्नोति बाधितुम् ॥
ऐकांतभक्त्येकनिष्ठम् जनमेतदातिस्फुटम् ॥ ६१ ॥
संसारो मायया मिथ्या भ्रमो मध्येऽन्तरायकृत् ॥
ब्रह्मज्ञाने जवनिका तन्नाशे ब्रह्मविद्भवेत् ॥ ६२ ॥
सर्पज्ञाने हते रज्जुज्ञानं स्यात्तत्कृतं भयम् ॥

१ अहन्तायाः २ भगवद्वाक्यम् ३ शरणाऽऽगतितः ४ अविद्यानाशात् ५ तस्य संसारस्य ६ कर्तृं आदिशब्देन देशविशेषादयः ७ एकोन्तोनिश्चयोत्राति ८ नश्येदेवेत्युत्तरान्वयि.

नश्येदेव तथैवेदं श्रीभागवत इर्यते ॥ ६३ ॥
( स्कं० १२ अ० ४ श्लो० ३१ ३२ ३३ )
यथा घनोऽर्कप्रभवोऽर्कदर्शितो ह्यर्कांशभूतस्य च चक्षुपस्तमः ॥
एवं त्वहं ब्रह्मगुणस्तदीक्षितो ब्रह्मांशकस्यात्मनं आत्मबन्धनः ॥ ६४ ॥
घनो यदार्कप्रभवो विदीर्यते चक्षुः स्वरूपं रविमीक्षते तदा ॥
यदा ह्यहङ्कार उपाधिरात्मनो जिज्ञासया नश्यति तर्ह्यनुस्मरेद ॥ ६५॥
यदैवमेतेन विवेकहेतिना मायामयाहंकरणात्मबन्धनम् ॥
छित्वाऽच्युतात्मानुभवोऽवतिष्ठते तमाहुरात्यान्तिकमङ्गसंप्लवम् ॥ ६६ ॥
धामाप्तिः संसृतेर्नाशे ब्रह्मत्वं त्वक्षराऽऽत्मता ॥
तत्पष्ठे पञ्चमेऽध्याये द्वादशस्कन्ध उच्यते ॥ ६७ ॥ ( अ० ६ श्लो० ३३ )

---

१ सर्पस्थाने अहन्ता रज्जुस्थाने अक्षरात्मा जीवः संसारभ्रमनाशे स्वात्मनि प्रपञ्चे चाक्षरब्रह्मात्मकताप्रतीतिः २ सूर्याऽधिभौतिकरूपस्य ३ सूर्यदर्शनप्रतिबन्धकः ४ अहंकारः ५ भगवत्कृतः ६ जीवस्य ७ कर्तृ ८ भगवतः ९ आत्यंतिकसंप्लवो मोक्षः

त एतदधिगच्छन्तिविष्णोर्यत्परमं पदम् ॥ अहंममेतिदौर्जन्यं न येषां देहगेहजम् ॥ ६८॥

( अ० ९ श्लो० ११ ) अहं ब्रह्म परं धाम ब्रह्माहं परमं पदम् ॥

एवं समीक्षन्नात्मानमात्मन्याधाय निष्कले ॥ ६९ ॥

उपाधिनाशे विज्ञाने ब्रह्मात्मत्वावबोधने ॥

गङ्गातीरस्थितो यद्वद्देवतां तत्र पश्यति ॥ ७० ॥

तथा कृष्णं परं ब्रह्म स्वस्मिञ्ज्ञानी प्रपश्यति ॥

इत्युक्तं श्रीमदाचार्यैर्जीवन्मुक्तिरियं परा ॥ ७१ ॥

अक्षरं जानतः सर्वं भवेदक्षररूपता ॥ ब्रह्मविद्ब्रह्मैव भवतीति श्रुत्या तथोदितम् ॥ ७२॥

आनन्दादितिरोभावाज्जीवभावो विचारितः॥भूयो भक्त्यानन्दलाभादैश्वर्यादेश्च सम्भवात्

श्रुते रसं ह्येवायं लब्ध्वानन्दी भवत्यतः ॥

---

१ सार्द्धश्लोकोयं सिद्धांतमुक्तावलीस्थः २ गंगायाः परमभक्तः ३ मूर्तिमतीं गंगाम् ४ प्रवाहादौ ५ प्रपञ्चम् ६ ब्रह्मवल्लीश्रुतेः ७ अयं तिरोहितानन्दोपि जीवो रसं आनन्दरूपं परं लब्ध्वा पुनरानन्दांशवान् भवति

[1]अपि वा तमादेशमप्राक्षो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम् ॥

इति स्याद्ब्रह्मता धामत्वात्कृष्णस्फूर्तिरुज्ज्वला ॥ ७४ ॥

स्वयं तदात्मना तेन प्रपञ्चोऽप्यक्षरात्मकः ॥

सर्वोऽपि शक्यते द्रष्टुमबाध्यज्ञानचक्षुषा ॥ ७५ ॥

सर्वं ब्रह्मात्मकं पश्यन्सर्वत्राऽविहता हरेः ॥

लीला विलोकयंस्तास्ता न किञ्चिदपि काङ्क्षति ॥ ७६ ॥

( स्कं० १ अ० ७ ) आत्मारामाश्चमुनयो निर्ग्रन्था अप्युरुक्रमे ॥

कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः ॥ ७७ ॥

तत्तल्लीलापरं पश्यन्सर्वत्र पुरुषोत्तमम् ॥

शब्दांस्तद्वाचकाञ्शृण्वन्सदा चरति निःस्पृहः ॥ ७८ ॥

कृष्णप्रेमामृतास्वादादारभ्यैहिकवैभवम् ॥

---

१ छान्दोग्याष्टमाध्यायश्रुतिः २ अक्षररूपेण ३ जीवन्मुक्तेन ४ विघातशून्याः ५ प्रथमस्कन्धेसूतोक्तिरियम् ६ अविद्याग्रन्थिरहिताः ७ विरुद्धांशपरिहारेण शब्दमात्रं तत्तल्लीलाविशिष्टभगवदभिधायकमवगच्छन् ८ हेतोः ९ ऐहिकवैभवं मानुषानन्दमारभ्य

तृणप्रायाणि गणयन्मोक्षान्तानि सुखान्यपि ॥ ७९ ॥
विकलोऽयं दाम्भिकोऽयं महात्मायं हरेर्जनः ॥
इति नाना जनोक्तिभ्यो न शोचति न हृष्यति ॥ ८० ॥
सख्या स्वस्वामिना स्वातिप्रियेण हरिणा सदा ॥
भगवता सह संलाप इत्याद्युक्तदशां गतः ॥ ८१ ॥

एकादशस्कन्धे नवयोगीश्वरप्रसङ्गे॥ क्वचिद्रुदन्त्यच्युतचिन्तया क्वचिद्धसन्ति नन्दन्ति वदन्त्यलौकिकाः॥नृत्यन्ति गायन्त्यनुशीलयन्त्यजं भवन्ति तूष्णीं परमेत्य निर्वृताः ॥८२॥

शृण्वन्सुभद्राणि रथाङ्गपाणेर्जन्मानि कर्माणि च यानि लोके ॥
गीतानि नामानि तदर्थकानि गायन्विलज्जो विचरेदसङ्गः ॥ ८३ ॥
एवं व्रतःस्वप्रियनामकीर्त्या जातानुरागो द्रुतचित्त उच्चैः ॥
हसत्यथो रोदिति रौति गायत्युन्मादवन्नृत्यति लोकबाह्यः ॥ ८४ ॥
खं वायुमग्निं सलिलं महीं च ज्योतींषि सत्त्वानि दिशो द्रुमादीन् ॥

१ शुष्कज्ञानिमोक्षपर्यन्तानि २ वेणुगीतसुबोधिनीस्थोयं गाथाछन्दश्वराः

सरित्समुद्रांश्च हरेःशरीरं यत्किञ्चभूतं प्रणमेदनन्यः ॥ ८५ ॥ १, १८
गृहीत्वापीन्द्रियरैर्थांनित्यारभ्य स भवति भागवतप्रधान उक्त इत्यंतम् ॥
कृष्णग्रहगृहीतात्मा न वेद जगदीदृशम्॥इयमेव परा भक्तिर्मानसीत्यभिधीयते८६
एतत्सिद्धौ पुनः किञ्चित्कर्तव्यं नावशिष्यते ॥
चेतस्तत्प्रवणं सेवेत्याचार्य्यैर्लक्षणं कृतम् ॥ ८७ ॥
विठ्ठलेशैः सङ्गृहीतं वक्तुं तल्लक्षणं यथा ॥
तामेवाह व्रजस्थानां श्रीगोपीजनवल्लभः ॥ ८८ ॥
( स्कन्ध ११ अ० १२ श्लो० १२ ) तानाविदन्मय्यनुषङ्गबद्धधियः स्वमात्मानम
दस्तथेदम् ॥ यथा समाधौ मुनयोऽब्धितोये नद्यः प्रविष्टा इव नामरूपे ॥८९॥
एतत्प्रकारा बहवोऽदर्श्यन्ताऽस्माकृतांशिभिः ॥

---

१ भगवद्व्यातिरिक्तमानशून्यः २ चेतसस्तस्मिन् भगवति प्रवणं सूच्यामेवसूत्रस्य भगवत्प्रवणं चेतएवसेवेत्यपरे ३ सिद्धान्तमुक्तावल्यां कृतम् ४ तानाविदान्नीतिवचनम् ५ मानसीलक्षणम् ६ गोप्यः ७ फलरूपभक्तिप्रकाराः ८ श्रीमदाचार्यैः ६०

स्वानुभूत्येकवेद्या सा वक्तुं शक्येत किं मया ॥ १० ॥

एवं विहरतो देहः पतेद्यदि तदिच्छया॥परमानुगृहीतस्य देहोऽपि स्यादलौकिकः॥११ ॥

आत्माऽभिन्नो महानन्दो हरेश्चरणरेणुजः ॥

देहमाहादिमस्कन्धे द्विविधं विधिनंन्दनः ॥ १२ ॥

प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनुम् ॥

प्रारब्धकर्मनिर्वाणो न्यपतत्पाञ्चभौतिकः ॥ १३ ॥

निर्गुणोऽप्राकृतः सोऽस्माच्छून्यः पुण्यैश्च पातकैः ॥

सगुणात्कर्मवद्धान्नः शरीराद्व्यतिरिच्यते ॥ १४ ॥

( स्कं० १० ) जहुर्गुणमयं देहं सद्यः प्रक्षीणबन्धनाः ॥

इत्युक्त्या निर्गुणप्राप्तिस्तासां सुव्यज्यते यतः ॥ १५ ॥

---

१ मानसीसम्पन्नस्य २ प्राकृताप्राकृतभेदेन ३ नारदः ४ एतं ह वाव न तपति किमहं साधु नाकरवं किमहं पापमकरवमितीत्यादिश्रुतिभ्यः ५ रासपञ्चाध्याय्यामन्तर्गृहगता गोप्यः

सूत्रेष्वेतत्फलाध्याये स्पष्टत्वेनप्रपञ्चितम् ॥
( अ० १ पा० २ सू० २ ) विवक्षितगुणोपपत्तेश्च ॥
इत्याद्यध्यायान्तरेऽपि तद्विनिर्णायिते श्रुतेः ॥ ९६ ॥
परं ब्रह्मैतद्ध्यायति रसति भजति सोऽमृतो भवति ॥
ब्रह्मसंस्थोऽमृतत्वमेति ॥ ( अ० १ सू० ३ ) तत्संस्थस्याऽमृतत्वोपदेशात् ॥
( स्कं० १० ) कुरुक्षेत्रसमागमप्रसङ्गे ॥ मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते ॥
इत्यादावमृतत्वं त्वप्राकृताकार उच्यते ॥ ९७ ॥
दुःखैर्जन्मजरामृत्युमोहसन्देहदोहदैः ॥रहिते महितेऽन्वर्थोऽमृतत्वमिति तत्र वाक्॥९८॥
कर्हिचिन्न भवेद्भूयः पर्यावर्त्तोऽस्य संसृतेः ॥ आम्रेडितं न स पुनरावर्त्तत इतिश्रुतौ ॥९९॥

---

१ ब्रह्मसूत्रेषु २ तुर्याध्याये चतुर्थपादे ३ एतमितः प्रेत्याभिसम्भवितास्मीत्यादिभ्यो विषयवाक्यश्रुतिभ्यः ४ आथर्वणश्रुतिः ५ छान्दोग्यश्रुतिः संस्थाभक्तिः ६ भक्तिमीमांसासूत्रम् ७ ऐहिकजन्मादिकमेवानिषिद्धं न त्ववतारवदैच्छिकं तदिति भावः ८ द्विरुक्तम् ९ छान्दोग्यान्ते.

गीतायाम् ॥ आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ॥
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ १०० ॥
तत्सेवैकार्हयाऽऽनन्दमय्यानिर्दोषया तया ॥
भगवद्रूपया तन्वा सेवा सिद्ध्यति सा सदा ॥ १०१ ॥
निर्गुणा परमा मुक्तिरियमेवाखिलाधिका ॥
यथैतदानन्दवल्ल्या तैत्तिरीये तथोच्यते ॥ १०२ ॥
ब्रह्मविदाप्नोति परम् ॥ तदेषाभ्युक्ता ॥ सत्यं ज्ञानमनन्तं ब्रह्म ॥
यो वेद निहितं गुहायां परमे व्योमन् ॥ सोऽश्नुते सर्वान्कामान्सह ॥
ब्रह्मणा विपश्चितेति ॥ इति मन्त्रेण संक्षिप्य वर्णितं विस्तरात्पुनः ॥

---

१ अलौकिक्या ब्रह्मरूपया २ श्रुतौ अस्माल्लोकात्प्रेत्येति जीवन्मुक्तिव्यावर्त्तनात्परा ३ अक्षरपुरुषोत्तमयोर्ज्ञाता पुरुषोत्तममाप्नोति ४ पूर्वोक्तमभिमुखीकृत्य व्याख्यानरूपेण सत्यंज्ञानमिति ऋगुक्ता ५ सच्चित्स्वरूपं गणितानन्दं देशकालाऽपरिच्छिन्नमक्षरं तत्र निहितं परं च यो वेद सः गुहायां हृदि आविर्भूते अक्षरधाम्नि पुरुषोत्तमेन सह कामानुपभुङ्क्ते

समग्रोपनिषत्प्राह बहुनोक्तेन किं मम ॥ १०३ ॥
यच्चरणाब्जनिशरणास्तत्करुणामन्दमकरन्दात् ॥
माद्यन्तिदेवमधुपाः स्वीये कृपयन्तु मयि निजाचार्य्याः ॥ १०४ ॥
निर्गुणमपि गुणपूर्णं तूर्णं वरणांद्विधाय शरणागम् ॥
तत्परवन्तं तनुते भगवन्तं भावदः स मे भूयात् ॥ १०५ ॥
सिद्धयत्त्येतद्धरेरेवानुग्रहादेव केवलम्॥न साधनान्तरं कर्तुं किञ्चिज्जीवेन शक्यते ॥१०६॥
कठमुण्डकयोः ॥ नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ॥
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं साम ॥तलवकारोपनिषदि ॥
यस्यामतं तस्य मतं मतं यस्य न वेद सः ॥ गीतायां ॥ नाहं वेदैर्न तपसा ॥
( स्कं० ११ अ० १२ श्लोक १ ) न रोधयाति मां योगो न सांख्यं धर्म उद्धव ॥
इत्यसाधनतामाह साधनानां हरिः स्वयम् ॥ १०७ ॥

१ सत्त्वादिरहितं ऐश्वर्यादिगुणपूर्णम् २ अङ्गीकारात् ३ निर्गुणीकृतभक्तस्याधीनम् ४ स्वीयतयाङ्गीकरोति

सेवा तु साधनं तन्वाऽस्मामिर्यत्किञ्चिदर्पितम् ॥
लौकिकं कृपया सेवात्वे न सोङ्गीकरोति चेत् ॥ १०८ ॥
किमासनं ते गरुडासनाय किं भूषणं कौस्तुभभूषणाय ॥
लक्ष्मीकलत्राय किमस्ति देयं वागीश किं ते वचनीयमस्ति ॥ १०९ ॥
भागवते ॥ विभूतये यत उपसेदुरीश्वरीं न मन्यते स्वयमनुवर्त्ततीं भवान् ॥
योगिनामप्यलभ्यस्य सर्वेशस्य परस्य हि ॥ आत्मपूर्णस्य लाभाय दीनानुग्राहिणः श्रुतौ
सुगमं साधनं प्रोक्तं सर्वथा शरणागतिः ॥ तस्यैवाकैतवोपाधिस्वसर्वस्वनिवेदनम् ॥ १११ ॥
गोपालपूर्वतापनीये ॥ यो ब्रह्माणं विदधाति पूर्वं यो विद्यास्तस्मै गोपायति कृष्णः ॥
यस्तं देवमात्मवृत्तिप्रकाशं मुमुक्षुर्वै शरणमनुव्रजेत् ॥ ११२ ॥
आरम्भेपि ॥ श्रीकृष्णो वै परमं दैवतम् ॥ श्वेताश्वतरादौ ॥
मुमुक्षुर्वै शरणमहं प्रपद्ये ॥ गीतायाम् ॥ सर्वधर्मान्परित्यज्य मामेकं
शरणं व्रज ॥ अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ११३ ॥

---

१ मानसपूजास्थं वचनमिदं निबन्धे धृतम् २ भगवत एव शरणागतिः

( स्कन्ध ११ ) ॥ तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् ॥
प्रवृत्तिं च निवृत्तिं च श्रोतव्यं श्रुतमेव च ॥ ११४ ॥
मामेकमेव शरणमात्मानं सर्वदेहिनाम् ॥
या हि सर्वात्मभावेन यास्यसे ह्यकुतोभयं ॥ ११५ ॥
( स्कन्ध ९ ) ॥ ये दारागारपुत्राप्तान् प्राणान्वित्तमिमं परम् ॥
हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे ॥ ११६ ॥
( स्कन्ध ११ ) नवयोगीश्वरप्रसङ्गे ॥ इष्टं दत्तं तपो जप्तं वृत्तं यच्चात्मनः
प्रियम् ॥ दारान्सुतान् गृहान् प्राणान् यत्परस्मै निवेदनम् ॥ ११७ ॥
बृहदारण्यके मधुविद्यायाम् ॥ स वा अयमात्मा सर्वेषां भूतानामधिपतिः
सर्वेषां भूतानां राजा तद्यथा रथनाभौ रथनेमौ चाराः समर्पिता एवमेवा
स्मिन्नात्मनि सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एवात्मानः

१ मह्यं समर्प्य दानविषयेपि त्यागार्थकधातुप्रयोगात्

समर्पिताः ॥ इत्यादिप्रुदितं तत्र प्रथमं शरणागतिः ॥
ततःसमर्पणं येनार्प्यमाणांगीकृतिर्भवेत् ॥ ११८
एतत्सर्वंहरेस्तोपादि नासित्ध्येद्दते गुरुं ॥
अतस्तद्बुद्धिराचार्यं तादृक्षं सततं व्रजेत् ॥ ११९ ॥
मुंडकोपनिषदि ॥ तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्॥
श्वेतकेतुविद्यायां ॥ आचार्यवान् पुरुषो वेद ॥ एकादशस्कंधे ॥
आचार्य्यचैत्यवपुषास्वगतिं व्यनक्ति ॥ आचार्यंमां विजानीयात् ॥
श्वेताश्वतरे ॥ यस्यदेवे पराभक्तिर्यथा देवे तथा गुरौ ॥
तस्यैते कथिताह्यर्थाःप्रकाशंते महात्मनः ॥ १२० ॥
( स्कंध ११ ) योगीश्वरप्रसंगे ॥ भयं द्वितीयाभिनिवेशतःस्यादीशादपेतस्य
विपर्ययोऽस्मृतिः ॥ तन्मायया तो बुध आभजेत्तंभक्त्यैकयेशं गुरुदेवतात्मा ॥१२१

---

१ क्रमनियमेहेतुः शरणागत्यावस्तूनांभगवदंगीकाराहत्वसिद्धेः २ गुरौहरिबुद्धिः ३ शास्त्रोक्तलक्षणकं ४ पुरुषोत्तमे ५ उपनिषत्प्रभृतिषूक्ताः ६ सर्वशक्तेर्ब्रह्मणःसकाशादुद्गतस्याध्यासचतुष्करूपीविपर्ययःस्वरूपाऽस्मरणंचतन्माययाभवति

परशरमाधवीयप्रथमाध्याये पुराणसारे ॥ गुरावतुष्टे रुष्टाःस्युःसर्वे देवा द्विजोत्तम ॥
तुष्टे तुष्टा यतस्तस्मात्सर्वदेवमयो गुरुः ॥ १२२ ॥
श्रेयोर्थीयदिगुर्वाज्ञां मनसा ऽपि न लंघयेत् ॥
गुर्वाज्ञापालकोयस्माज्ज्ञानसंपत्तिमश्नुते ॥ १२३ ॥
आदित्यपुराणे ॥ पाद्मे रुष्टे हरस्त्राता हरे रुष्टे हरिस्तथा ॥
हरौ रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ॥ १२४ ॥
इत्यवश्यं व्रजेच्छास्त्रविज्ञवैष्णवसद्गुरुं॥निर्णेतव्यं मयाऽन्यत्रेदंकिंचिदिह दर्श्यते १२५
गौतमीयतंत्रे ॥ अवैष्णवोपदिष्टेन मंत्रेण निरयं व्रजेत् ॥
पुनश्च विधिनासम्यग्ग्राहयेद्वैष्णवाद्गुरोः ॥ १२६ ॥
महाकुले प्रसुतोऽपि सर्वशास्त्रेषु दीक्षितः ॥
सहस्रशाखाध्यायी च न गुरुःस्यादवैष्णवः ॥१२७॥

---

१ सत्सिद्धांतमार्त्तंडादिग्रंथेषु

षट्शास्त्रज्ञो भवेद्विप्रोवेदवेदांतपारगः ॥
अवैष्णवोगुरुर्नस्याद्वैष्णवःश्वपचो गुरुः ॥ १२८ ॥
इत्यादि वचनैस्तादृक् गुरुंसंमन्यते उभे ॥
कुर्वीत कृष्णमंत्राभ्यां नान्यथाते भविष्यतः ॥ १२९ ॥
पुनर्गौतमीयतंत्रे प्रथमाध्याये ॥ गाणपत्येषु शैवेषु तथा शाक्तेषु सुव्रत ॥
सर्वेषु मंत्रवर्गेषु वैष्णवं श्रेष्ठमुच्यते॥वैष्णवेषु च मंत्रेषु कृष्णमंत्राःफलाधिकाः १३०
अन्यत्रापि ॥ कृष्णमंत्रविहीनस्यपापिष्ठस्य दुरात्मनः ॥
श्वानविष्ठासमं चान्नं जलंच मदिरासम ॥ १३१ ॥
इति ॥ अष्टोत्तरेण शरणं पंचाक्षर्य्यासपूर्वया ॥
गच्छेत्समर्पयेत्सर्वं श्रुतिस्मृत्युक्तताविमौ ॥ १३२ ॥
उद्धाराद्यनयोश्चक्रे गोस्वामिपुरुषोत्तमैः ॥
उपदेशादिविषयशंका निरसने स्फुटम् ॥ १३३ ॥

---

१ वैष्णवब्राह्मणादेवशरणादिमंत्राग्राह्याइत्येवंतात्पर्यकोर्थवादोयं २ भगवतःशरणगमनमा त्मनिवेदनंच ३ गद्यसहितया ४ मंत्रौ

अधिक्रियेत सेवायां सद्गुरोः कृष्णमन्त्रतः॥ वैष्णवःसन्यथा श्रौते गायत्र्यध्ययने द्विजः॥

एकादशे ॥ एवं धर्मै[2]र्मनुष्याणामुद्धवात्मनिवेदिनाम् ॥

मयि संजायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते ॥ १३५ ॥

गीतायाम् ॥ मां हि पार्थ व्य[3]पाश्रित्य येऽपि स्युः पापयोनयः ॥

स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परांगतिम् ॥ १३६ ॥

किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयोऽमलाः॥अनित्यमसुखं लोकमिमं प्राप्य भजस्व मां

तत्रैव ॥ अपि चेत्सुदुराचारो भजते मामनन्यभाक् ॥

साधुरेवस मंतव्यः सम्यग्व्यवसितो हि सः ॥ १३८ ॥

क्षिप्रं भवति धर्म्मात्मा शश्वच्छान्तिं निगच्छति ॥

कौन्तेय प्रतिजानीहि नमे भक्तःप्रणश्यति ॥ १३९ ॥

इति सर्वोपि भगवत्सेवायामधिकारिणः॥ ततो गुर्वाज्ञया देवं शुद्धः सेवेत शक्तितः ॥१४०

१ यथा जन्मना शूद्रप्रायोपि गायत्रीग्रहणेन द्विजः सन् वेदाध्ययनादावधिक्रियते २ कृतात्मनिवेदनानामेव श्रवणकीर्त्तनादिधर्म्मैर्भक्तिरुद्भवति ३ व्यपाश्रयः शरणागतिः ४ चातुर्वर्णिकाः

कालनिर्णयदीपिकायां नारदीये ॥ प्रातर्मध्यं दिनेसायं विष्णुपूजां समाचरेत् ॥
यथा सन्ध्या तथा नित्या विष्णुपूजा स्मृता बुधैरिति ॥ १४१ ॥
मन्त्रैः सद्गुरुणा सम्यङ्मूर्त्तावाविष्कृतं हरिम् ॥ भजेत्प्रेम्णा सदा तत्तदुपचारैर्महोत्सवैः ॥
कालनिर्णयदीपिकायां प्रातःकाले ॥ पूजनं प्रतिमायां तु उत्तमं परिकीर्तितम् ॥
इति विष्णुधर्मोत्तरात् ॥ ( स्कं० ११ ) मल्लिङ्गमद्भक्तजनदर्शनस्पर्शनार्चनैः ॥
इति प्रक्रम्य हरिणा निरणायीहं सेवना॥१४२

समार्चास्थापने श्रद्धा स्वतः संहत्य चोद्यम इत्यादिभिः ॥
गुर्वाज्ञोक्तप्रकारेण सदा सेवेत संस्मरेत्॥कीर्तयेत्तद्भक्तगीतैः सच्छास्त्रैः शृणुयात्परम् ॥
यथाधिकारं लीलास्ताःक्रमशोभावयन्हृढम् ॥
निःसाधनोऽर्पितात्मादिर्दैन्यात्माणेश्वराश्रितः ॥ १४६ ॥
सर्वदा देहगेहादौ तदेकार्थत्वभावनः ॥ ( स्कंध ७ ) ॥

१ प्रतिमाशालग्रामागोमतीचक्रादीनि २ प्रतिमादौ ३ संस्कृतैः प्राकृतैश्च कीर्त्तयेत्
४ वेदब्रह्मसूत्रभागवतादिशास्त्रैः पुरुषोत्तमं शृणुयात्

यस्त आशिष आशास्ते न स भृत्यः स वै वणिक् ॥ १४६ ॥
इत्याद्युक्त्या सुनिष्कामो भृत्यभावादकैतवः॥सर्वलौकिककर्माणि ताटस्थ्येनैव नाटयन्॥
लाभालाभौ समौकुर्वन्मन्वानस्तद्वशं जगत्॥विवेकंधैर्य्याश्रयादियुक्तसच्चिन्तनतत्परः ॥
पुत्रे कृष्णप्रिये प्रीतो न प्रीतस्तत्पराङ्मुखे॥उदासीनेस्वयंकुर्वन्प्रातिकूले गृहं त्यजन् १४९ ७३
वर्त्तेत वैष्णवाचारैः श्रीमदाचार्य्यदर्शितैः ॥ सप्रमाणैर्गुरोर्भक्तोजिज्ञासुस्तन्मुखाच्छ्रुतेः ॥
गृहादि बाधकं यत्तत्तत्परत्वेन युञ्जतः॥सर्वात्मना च भजतो भवेत्मत्युत साधकम् १५१
(स्कंध ५) ॥ भयं प्रमतस्य वनेष्वपि स्याद्यतः स आस्ते सह षट्सपत्नः ॥
जितेन्द्रियस्यात्मरतेर्बुधस्य गृहाश्रमः किं नु करोत्यवद्यम् १५२
उपदेशवादे ब्रह्मवैवर्त्तब्रह्मखण्डीयैकादशाध्याये नारदं प्रति ब्रह्मवाक्यानि ॥
वैष्णवानां हरेरर्चा तपस्या च श्रुतौ श्रुता॥वैष्णवस्त्वं गृहे तिष्ठ कुरु कृष्णपदार्चनम्॥
अन्तर्बाह्ये हरिर्यस्य किं तस्य तपसा सुत॥नान्तर्बाह्येहरिर्यस्य किं तस्य तपसा वृथा ॥

१ विवेकस्तु हरिः सर्वं निजेच्छातः करिष्यतीत्यादिनाश्रीमदाचार्योक्तः २ गुरुमुखाच्छ्रुतेः सकाशात् ३ भगवन्मात्रोपयोगित्वेन ४ भगवतिभक्तिमतः ५ अपरोक्षज्ञानिनः

७८

तपसा हरिराराध्यो नान्यः कश्चन विद्यते ॥ यत्र तत्र कृतं कृष्णसेवनं परमं तपः ॥१५५॥
इत्यादीनि ॥ निवे दिभिःसमर्प्यैव सर्वं कुर्यादिति स्थितिः ॥
इति निर्वाह आचार्य्यैरुक्त आहेदमुद्धवः ॥ १५६ ॥
( स्कन्ध ११ अ० ६ ) त्वयोपभुक्तस्रग्गन्धवासोऽलङ्कारचर्चिताः ॥
उच्छिष्टभोजिनो दासास्तव मायां जयेमहि ॥१५७॥
महोपनिषदि श्रूयते ॥ एक एव नारायण आसीत्न ब्रह्मा न द्यावापृथिवी सर्वे देवाः सर्वे पितरः सर्वे मनुष्याः विष्णुनाऽशितमश्नन्ति विष्णुनाऽऽघ्रातं जिघ्रन्ति विष्णुना पीतं पिबन्ति विष्णुना रसितं रसयन्ति तस्माद्विद्वांसो विष्णूपहृतं भक्षयेयुरिति ॥
कृष्णाप्रसादभूतं यदन्नं दुष्टस्य सङ्गतिः ॥ अन्यदेवाश्रयश्चेति सर्वथैतत्त्रयं त्यजेत् ॥१५८॥
आचारप्रकाशे भगवत्पूजानिरूपणे ब्रह्माण्डे ॥ पत्रं पुष्पं फलं तोयमन्नं पानीयमौषधम् ॥ अनिवेद्य न भुञ्जीत यदाहाराय कल्पितम् ॥१५९॥ तत्रैव कौर्मे ॥ अनर्पयित्वा गोविन्दे यैर्भुक्तं धर्मवर्जितं ॥ शुनो विष्ठासमं चान्नं नीरं च सुरया समम् ॥ १६० ॥

१ कृतात्मनिवेदनैः सह सर्वं कुर्यात् २ भगवत्प्रसादः

इत्यन्नं निन्द्यतेतोहक्सङ्गः सर्वत्रवर्जितः ॥ उक्तमस्मद्गुरुश्रीमद्व्रजवल्लभशर्म्मभिः॥ १६१
अग्निवद्भगवद्भावो दुःसङ्गो जलमेव हि ॥ सत्सङ्गव्यवधानेन नाशयेत्तु न चान्यथा॥१६२

॥ भागवते ॥ प्रसङ्गमजरं पाशमात्मनः कवयो विदुः ॥
स एव साधुषु कृतो निःसङ्गत्वाय कल्पते ॥ १६३ ॥

( स्कन्ध ५ ) रहूगणैतत्तपसा न याति न चेज्यया निर्वपणाद्गृहाद्वा ॥
नच्छन्दसा नैव जलाग्निसोमैर्विना महत्पादरजोऽभिषेकम् ॥१६४

( स्कन्ध ४ ) क्षणार्द्धेनापि तुलये न स्वर्गं नापुनर्भवम् ॥
भगवत्साङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥ १६५ ॥

इति सर्वत्र सत्सङ्गः साधनं परमं मतम् ॥ देवास्तद्दत्तसामर्थ्यादि कैकामितकामदाः॥१६६
दातुं शक्ता न भक्तिं च मुक्तिमीशोऽपि भोगदः ॥ खट्वाङ्गमुचुकुन्दादिभ्यो न मुक्तिद
दुस्ततः ॥१६७॥

---

१ अनिवेदितमन्नादिदुष्टानां सङ्गश्च २ समर्पणमन्त्रोपदेष्टारोस्य कवेर्मातामहागोस्वामि
विशेषाः ३ भगवद्दत्तशक्तेः ४ शिवः

अलौकिकः कल्पतरुः स्वाभाविककृपाम्बुधिः ॥ प्रावृषेण्यो नवो मेघः सर्वकामाम्बुवर्षणे ॥
सेव्यः सदा स एवैकोऽसाम्याधिक्योऽखिलेश्वरः ॥ मुकुन्द एवशक्नोति दातुं मुक्तिं स्वसेवनम्
वैष्णवानां कृष्ण एव सदैवं तदतिक्रमे ॥ दोषः काण्डे द्वितीयस्मिन्संहितायां श्रुतो हि नः ॥

यो वै स्वां देवतामतियजते ॥ प्रस्वायै देवतायै च्यवते ॥
न परां प्राप्नोति ॥ पापीयान्भवतीति ॥

स्वल्पदान्सुलभक्रोधान् दुःखसाध्यांस्तदंशकान् ॥
त्यक्त्वा सर्वप्रदं स्वल्पतोषं सेवध्वमंशिनम् ॥ १७१ ॥

पाण्डवगीतायां ॥ वासुदेवं परित्यज्य योऽन्यं देवमुपासते ॥
तृषितो जान्हवीतीरे कूपं खनति दुर्मतिः ॥ १७२ ॥

॥ द्वितीयस्कन्धे ॥ अकामः सर्वकामो वा मोक्षकाम उदारधीः ॥
तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥ १७३ ॥

---

१ न तत्समश्चाभ्यधिकश्च दृश्यत इतिश्रुतिभ्यः २ तीयस्यङित्सूपसंख्यानमिति वार्त्तिकात्साधुः ३ अस्माकं तैत्तिरीयाणां

निष्कामोऽपि तदङ्गत्वं मत्वा सेवेत चेद्यथा॥ यथा तरोर्मूलनिषेचनेनेति गतार्थता॥१७४
तस्मादनन्यभावेन तमेवैकं य आश्रितः॥ दैन्याद्भिः साधनं कृष्णः संसारात्किं न मोचयेत्॥
अभेदाद्व्रजतो मूर्तावेवं संभाषणादिकः॥ साक्षात्कारो भवेत्तस्य भगवान् परवानिव॥१७६
यथा मुरारिदासाद्याः स्वाचार्यकृपयाऽऽमन्॥ एतद्रहस्यं परममनुभूयैव बुध्यते॥१७७
न ते चतुर्विधां मुक्तिं वाञ्छन्ति मनसा क्वचित्॥ तदुक्तं हरिणा सेवा रसज्ञैरितरैरपि १७८
सालोक्यसार्ष्टिसामीप्यसायुज्यैकत्वमप्युत॥ दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः॥

मद्गुद्धिद्सेवानुरक्तमनसामभवोऽपिफल्गुः॥
न योगसिद्धीरपुनर्भवं वा०॥
नेच्छन्ति सेवया पूर्णाः किमन्यत्कालविद्रुतम्॥
इति मोक्षेऽप्यनाकांक्षा लौकिके तु कुतस्तराम्॥ १८०॥

---

१ देवानां भगवद्वयवरूपत्वम् २ यथा तरोर्मूलनिषेचनेन तृप्यंतितत्स्कन्धभुजोपशाखाः॥ प्राणोपहारो बलिरिन्द्रियाणां तथैव सर्वार्हणमच्युतेज्योतिभागवताद्युक्तन्यायात् ३ कृष्णं ४ जीवं ५ साक्षाद्भगवानेवायमितिबुद्ध्या ६ एषामाख्यायिकाश्चरित्रग्रंथेभ्योज्ञेयाः

सर्वं ब्रह्मात्मकं तत्र सलीलं पुरुषोत्तमम्॥पश्यन्नतिदृढस्नेहोऽप्यलक्ष्यचरितो भवेत्१८१

तनुजातः परां भक्तिमहो यान्ति गृहे स्थिताः ॥
श्रीमदाचार्य्यकृपया नान्यथा तपसा वने ॥ १८२ ॥

अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः ॥
तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम् ॥ १८३ ॥

प्रभवो भक्तिहेतौ तात्सिद्धिमाहुरनुग्रहात्॥न साधनैर्जीवकृतैस्तनुजाद्यप्यनुग्रहात् १८४

मुख्यं हि तस्य कारुण्यं भक्तिसूत्रेऽपि वर्णितम् ॥
पुष्टिमार्गोऽयमेव स्यात्पोषणं तदनुग्रहः ॥ १८५ ॥

---

१ पश्यन्नपिविक्षिप्तवद्भासमानः २ शरीरसेवातः ३ तैत्तिरीये नारायणोपनिषदि किंचित्पाठभेदेन कठवल्लीषु च पठ्यते ४ भगवतोऽनुग्रहात् ५ प्रभवः श्रीविठ्ठलाचार्याः ६ ग्रंथविशेषे ७ भक्तिसिद्धिम् ८ ननु द्विविधसेवातस्तत्सिद्धिः पूर्वमुक्तेतिचेत्सत्यं परं तयोरप्यनुग्रहसाध्यत्वादनुग्रहैकनिदानकत्वंभक्तेरक्षतमिति भावः ९ अ० २ सू ४९ शांडिल्यसूत्रंमुख्यंनिदानम् १० पुष्टिरनुग्रहस्तत्प्रधानो मार्गः ११ द्वितीयस्कंधवचनमिदम्

एताद्दशस्य भगवदत्यन्तकृपया यदि ॥ गृहस्थास्ताद्दशाःसर्वे तदा न त्याग इष्यते ॥
नियतं कुरु कर्म त्वं सङ्गं त्यक्त्वा समाचरेत्॥इति गीतासु निर्णीतं त्त्वो मोक्षमिमं जगौ॥
( स्कं० ६ अ० ११ ) ममोत्तमश्लोकजनेषु सख्यं संसारचक्रे भ्रमतः स्वकर्मभिः ॥
त्वन्माययात्मात्मजदारगेहेष्वासक्तचित्तस्य न नाथ भूयात् ॥
न चेदेवं त्यजेद्गेहं भजेदेको निजेश्वरम्॥व्रजेद्यथा रुचि स्थानं व्रजे प्रायो वसन्तिते १८९
सर्वत्र या भ्रमेद्भूमौ सङ्गं कुर्वीत ताद्दशाम्॥लोकद्दष्ट्या सुखं दुःखं मित्रवद्धरये वदेत् १९०
पारतन्त्र्यं भगवतःस्वातन्त्र्यं तस्य जायते॥ताद्दशानां दशामाह स्वयं दुर्वाससं हरिः ॥
( स्कन्ध ९ ) अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज ॥
साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः ॥ १९२ ॥
नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना ॥
श्रियं चात्यन्तिकीं ब्रह्मन्येषां गतिरहं परा ॥ १९३ ॥

---

१स्त्रीपुत्रादयः २भिन्नवाक्यस्थंपादद्वयम् ३स्वगृहेप्रेमपूर्णसर्वचित्तैकाग्र्येण भगवद्गुणगानादिरूपम्
४सर्वानुकूल्यं न चेत् ५परमभक्ताबहुशो व्रजदेशे विचरंतिह मुक्तस्यवस्तुनःसुखदुःखादिद्वन्द्वाभावात्

ये दारागारपुत्राप्तान्प्राणान्वित्तमिमं परम् ॥

हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे ॥ १९४ ॥

मयिनिर्वद्धहृदयाः साधवः समदर्शनाः॥वशेकुर्वन्तिमां भक्त्या सत्स्त्रियःसत्पतिं यथा॥

मत्सेवया प्रतीतं च सालोक्यादिचतुष्टयम् ॥

नेच्छन्ति सेवया पूर्णाःकुतोऽन्यत्कालविद्रुतम् ॥ १९६ ॥

साधवो हृदयं मह्यं साधूनां हृदयं त्वहम् ॥ मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपि ॥

इति ॥ महानुभावा भापन्ते जीवन्मुक्तिमिमां पराम् ॥

अमृत्वं परा मुक्तिः स आकारस्त्वलौकिकः ॥ १९८ ॥

आनन्दांशतिरोधाने निराकारत्वमीरितम् ॥ पुनस्तदाविर्भवने भवेदप्राकृताकृतिः१९९

तेन नास्य परिच्छेदो न भेदो हयहस्तिवत् ॥

न तावन्मात्रताऽऽकारे जरादीनां क्व सम्भवः ॥ २०० ॥

---

१ हयादीनामन्योन्यं भेदवदीश्वराद्भेदः जीवदेहाविभागश्च २ कामान्नीकामरूप्यनुसंचरन्नित्यादौ कामरूपत्वश्रवणादाकारे नियतत्वम्

भाष्यादौ स्पष्टमेवैतत्तेन नात्र प्रपञ्च्यते॥धर्माविर्भावतो जातेऽक्षरत्वे तत्रं लीयते॥२०१ म.

अंशो बृहति तद्वाग्निजले सैन्धवखिल्यवत् ॥
तदोद्धृत्य कृपाम्भोधिः सायुज्येनानुभावयेत् ॥ २०२ ॥
लीलाः सर्वाः सदा देवो गोपानुद्धरद्यथा ॥
( स्कन्ध १० ) दर्शयामास लोकं स्वं गोपानां तमसः परम् ॥ २०३ ॥
सत्यं ज्ञानमनन्तं यद्ब्रह्म ज्योतिः सनातनम् ॥
यद्धि पश्यन्ति मुनयो गुणापाये समाहिताः ॥ २०४ ॥
ते तु ब्रह्मर्ह्रदं नीता मग्नाः कृष्णेन चोद्धृताः ॥
गोस्वामिभिर्गिरिधरे रूपितारीतिरुद्धृतेः ॥ २०५ ॥

---

१ आनन्दस्यैश्वर्यादिधर्माणां च २ अक्षरे अंशो जीवः ३ लवणशकलवत् यथा सैंधव खिल्यउदके प्रास्तउदकमेवानुविलीयेतेत्यादिश्रुतिभ्यः ४ अक्षरात् पृथक्कृत्य ५ सोऽश्नुते सर्वान् कामान्सहेतिश्रुत्युक्ते न ६ नित्यक्रीडादिविशिष्टः परः ७ सत्यं ज्ञानमनंतं ब्रह्मेत्यादिश्रुत्युक्तमक्षरम् ८ अक्षररूपमगाधस्थानम्

उद्धृतौ परमः क्लेशो विरहानलसम्भवः ॥
यदा देहादिनाशाय समर्थो जायते तदा ॥ २०६ ॥
निजं श्रीमत्कृष्णचंद्रः स्वाधिकारानुसारतः ॥
परमानन्दलीलां स्वामनुभावयति प्रभुः ॥ २०७ ॥
शुद्धाद्वैतविचारार्के इदं श्लोकद्वयं स्थितम् ॥

( अ० २ सू० ४४ ) शाण्डिल्यसूत्र्याम् ॥ संमानबहुमानप्रीतिविरहेतरविचिकित्सा महिमख्यातितदर्थप्राणस्थानतदीयतासर्वतद्भावाप्रातिकूल्यादीनि च स्मरणेभ्यो बाहुल्यात् ॥ विरहो भक्तिसूत्रोक्तस्तथाऽतप्ततनुश्रुतेः ॥ २०८ ॥
तापक्लेशौ प्रजायेतां ततोऽसह्यौ यदा तदा ॥ क्रमादन्नमयाद्यात्मा विशेद्देहादि पञ्चकं ॥
( अ० ४ पा० ४ सू० १ ) सम्पद्याविर्भावः स्वेन शब्दात् ॥

---

१ यतो वाचइत्युक्तोऽगणितानंदः २ अतप्ततनूर्नतदामो अश्नुतइत्यादि ३ देहमन्नमयः प्राणं प्राणमयः मनइंद्रियाणि च मनोमयः तेन तेषां तत्तदात्मकत्वंजीवोऽक्षरात्मकत्वाद्विज्ञानमयः आनंदमयः परःसहाशितापुरुषोत्तमः स्वतन्त्रः

इत्यादिना सूत्रकृताऽक्षरसम्पत्त्यनन्तरम् ॥
आविर्भावःपरेच्छातः क्रीडा चोक्ता श्रुतौ मता ॥
अस्माल्लोकात्प्रेत्य लीनोऽक्षरेऽत्वः पुनरुद्धृतः ॥
तनूं चरणरेणूत्थां लब्ध्वा विरहतापितः ॥ २११ ॥
उपसंक्रम्यान्नमयादीनानन्दमयं परम्॥कामभोगी कामरूपी कामान् भुङ्क्ते परेण सः ॥
तैत्तिरीये ब्रह्मभृगुवल्ल्योः सूत्रेषु च स्फुटम् ॥
सर्वोपनिषदश्चाहुः शक्तो वक्तुं न मादृशः ॥ २१३ ॥
नातः परतरं किञ्चिन्नावृत्तिर्न गुणोद्भवः ॥
इदं श्रीवल्लभाचार्य्य कृपयेवान्यथा न हि ॥ २१४ ॥
दैवोद्धारप्रयत्नात्मा भगवद्वदनानलः॥तस्याज्ञया प्रादुरासीद्वस्तुतः कृष्ण एव सः॥२१५
चरित्रचिन्तामण्यादौ पाद्मादिवचनैर्दृढम् ॥ सर्वाचार्य्यकथापूर्वं निर्णीतंचानुभूयते ॥
नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः ॥

१ भगवतः २ कथापूर्वकम् ३ अद्यापि तन्नामजपादिभ्यो यथोक्तफललाभात्

नमो वाचे नमो वाचस्पतये नमो ब्रह्मणे बृहते करोमि ॥

ब्रुवन्तीत्यादयो वेदास्तत्स्वरूपं सनातनम् ॥

इति श्रुतिरहस्ये तत्प्रकाशादिषु निश्चयः ॥ २१७ ॥

प्रसंगाद्वैष्णवाचारा विविच्यन्तेऽत्र केचन ॥

धारयेत्सर्वदा मालामामन्त्रग्रहणाद्गुरोः ॥ २१८ ॥

तुलसीकाष्ठजां कण्ठे क्षणार्धं न त्यजेत्तथा ॥

तन्मार्गशीर्षमाहात्म्ये स्कान्दे प्रावोचदच्युतः ॥ २१९ ॥

तुलसीकाष्ठजांमालां कण्ठस्थां वहते तुयः॥अप्यशौचोऽप्यनाचारो मामेवैति न संशयः धारयन्ति न ये मालां हैतुकाः पापबुद्धयः॥नरकान्न निवर्त्तन्ते दग्धाःकोपाग्निना मम ॥ इत्यधारणतः प्रत्यवायान्नित्यत्वमीरितम्॥मरणावसरेऽप्येषा न त्याज्यामोक्षदायिनी॥ काशीखण्डे एकोनविंशाध्याये ॥ हरिनामाक्षरमुखं भाले गोपीमृदाङ्कितम् ॥

---

१ आचार्यस्वरूपम् २ गोस्वामिगिरिधरैः काश्यैः कृते ग्रंन्थे ३ मंन्त्रग्रहणमारभ्य ७ सदैव कंठेस्थितां अन्यथाकंठेनहतइत्येवर्वदेत् वचनमिदं विष्णुधर्मोत्तरेप्यस्ति

तुलसी मालिकोरस्कं न स्पृशेयुर्यमोद्भटाः ॥ २२३ ॥

गारुडे मार्कण्डेयः ॥ निवेद्य केशवे मालां तुलसीकाष्ठसम्भवाम् ॥

वहन्ति ये नरा भक्त्या तेषां वै नास्ति पातकम् ॥ २२४ ॥

तदा प्रीतमनास्तस्मिन्कृष्णो देवकिनन्दनः ॥

तुलसीकाष्ठसम्भूतम् शिरोबाहुविभूषणम् ॥ २२५ ॥

तुलसीकाष्ठमालां तु प्रेतराजस्य दूतकाः ॥ दृष्ट्वा नश्यति दूरेण वातोद्धूतं यथा रजः॥

तुलसीकाष्ठसम्भूते माले कृष्णजनप्रिये ॥ बिभर्मि त्वामहं कण्ठे कुरु मां कृष्णवल्लभम् ॥

तुलसीदलजा माला निषिद्धा कालपञ्चके॥ हारीतेनं शिवः पाद्मे विधत्ते तद्धृतिं सदा॥

स्नानकाले तु यस्याङ्गे दृश्यते तुलसी शुभा ॥

गङ्गादिसर्वतीर्थेषु स्नातं तेन न संशयः ॥ २२६ ॥

तुलसीमालिकां धृत्वा यो भुङ्क्ते गिरिनान्दिनी ॥

१ स्नानभोजनमैथुनमलमूत्रविसर्जनकालेषु २ स्वस्मृतौ ३ स्नानभोजनादिकालेष्वपि तत्काष्ठमालाधृतिम्

सिक्थे सिक्थे स लभते वाजपेयफलं शुभम् ॥ २३० ॥
बहुना किमिहोक्तेन शृणु त्वं वरवर्णिनि॥विड्डुत्सर्गादिकालेऽपि न त्याज्या कण्ठमालिका
तथा ॥ यत्कण्ठे तुलसी नास्ति ते नरा मूढमानसाः ॥
अन्नं विष्ठा जलं मूत्रं पीयूषं रुधिरं भवेत् ॥ २३२ ॥
ततःसर्वेषु कालेषु न त्याज्या कण्ठमालिका॥क्षणार्द्धं तद्विहीनोऽपि विष्णुद्रोही न संशयः
स्कान्दे ॥ तुलसीकाष्ठमालां यो धृत्वा भुङ्क्ते द्विजोत्तमः ॥
सिक्थे सिक्थे स लभते वाजपेयफलं मुने ॥ २३४ ॥
तुलसीकाष्ठमालां यो धृत्वा स्नानं समाचरेत् ॥
पुष्करे च प्रयागे च स्नातं तेन मुनीश्वर ॥ २३५ ॥
तत्रैव ॥ यज्ञोपवीतवद्धार्या कण्ठे तुलसिमालिका ॥
नाशौचं धारणे तस्या यतः सा ब्रह्मरूपिणी ॥ २३६ ॥
पूजाङ्गशङ्खचक्रादि गोपीचन्दनमृत्स्नया ॥ कुर्यान्निषेधस्तत्त्वायाः पूजाशून्येकचिन्मृदः

१ आदिपदान्मैथुनमूत्रोत्सर्गादिसंग्रहः

आचारप्रकाशे ऊर्ध्वपुण्ड्रविधौ हलायुधीये॥गोपीचन्दनमुद्रां च कृत्वा भ्रमति भूतले॥
सोऽपि देशो भवेत्पूतः किं पुनर्यत्र संस्थितः ॥ २३८ ॥
पाद्मे ॥ कृष्णनामाक्षरैर्गात्रमङ्कयेच्चन्दनादिना ॥
स लोकपावनो भूत्वा तस्य लोकमवाप्नुयात् ॥ २३९ ॥
॥ तथा भगवद्वचः॥ ममाऽवतारचिन्हानि दृश्यन्ते यस्य विग्रहे ॥
मर्त्यो मर्त्यो न विज्ञेयः स नूनं मामकी तनुः ॥ २४० ॥
नीलकण्ठाह्निके च सनत्कुमारः ॥ कृष्णायुधाङ्कितं देहे तोयचन्दनमृत्स्नया ॥
प्रयागादिषु तीर्थेषु स गत्वा किं करिष्यति ॥ २४१ ॥
यदा यदा प्रपश्येत देहं शंखादिचिन्हितम्॥तदा तदा जगत्स्वामी तुष्टो हरति पातकम्॥
॥ पाद्मे भगवान् ॥ गोपीचन्दनमृत्स्नाया लिखितं यस्य विग्रहे ॥
शङ्खचक्रगदापद्मं तस्य देहे भवाम्यहम् ॥ २४३ ॥
सौवर्णं राजतं ताम्रं कांस्यं मृन्मयमेव वा ॥
चक्रं कृत्वा तु मेधावी धारयेत विचक्षणः ॥ २४४ ॥

उपवीतादिवद्धार्य्याः शङ्खचक्रगदादयः॥ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतः ॥२४॥
इत्थं विधीयते मुद्रा मृन्मयी धातुचक्रतः॥द्विजानामपि धर्मोयमुपवितातिदेशतः ॥
मार्गशीर्षमाहात्म्ये तृतीयाध्याये ॥ चक्रलाञ्छनहीनस्य विप्रस्य विफलं भवेत् ॥

क्रियमाणंच यत्कर्म वैष्णवानां विशेषतः ॥ २४७ ॥

इत्यावश्यकता स्कान्दे वर्णिता विप्रधर्म्मता॥प्रस्तुत्य मृन्मयीं मुद्रां पूजाङ्गत्वयथोदितम्
शङ्खचक्रादिरहितः पूजां यस्तु समाचरेत् ॥निष्फलं पूजनं तस्य हरिश्चापि न तुष्यति॥
यस्तु सन्तप्तशङ्खादिलिङ्गाङ्किततनुर्नरः ॥ स सर्वयातनाभोगी चाण्डालो जन्मकोटिषु॥
इदं बृहन्नारदीयं पृथ्वीचन्द्रोदयेस्थितं ॥ अङ्कनं तप्तमुद्रा स्याच्छूद्रतां त्रिकयोश्च सा ॥
ऊर्ध्वपुण्ड्रन्तु भगवत्प्रसादद्रव्यतो मतम् ॥वैष्णवानां च शैवानां द्विजानांनित्यमुच्यते ॥
मदनपारिजाते च ब्राह्मे॥ यागो दानं तपो होमः स्वाध्यायः पितृतर्पणम् ॥

भस्मीभवति तत्सर्वमूर्ध्वपुण्ड्रं विना कृतम् ॥ २५२ ॥

स्कान्दे मार्गशीर्षमाहात्म्येऽपीदमेव वाक्यम् ॥ धर्मप्रवृत्तौ स्मृतिसारसमुच्चये ऊर्ध्वपुण्ड्र

१ नाकनंविप्रहेवेदपंथानमाश्रितइत्यादौ वृषोत्सर्गादौतथाप्रसिद्धेः

विधिं प्रक्रम्य ॥ ललाटे तिलकं कृत्वा कुर्य्युःशैवाश्च वैष्णवाः ॥
तर्पणं चापि वै श्राद्धमन्यथा निष्फलं भवेत् ॥ २५३ ॥
आचारमयूखे च शौनकः ॥ ऊर्ध्वपुण्ड्रं शिवस्यैवं विष्णोः कुर्य्युश्च वा बुधाः ॥
मूर्ध्नि मूलेन मन्त्रेण शेषं द्वादशनामभिः ॥ २५४ ॥
धर्मप्रवृत्तौ स्मृतिसारसमुच्चये ॥ ऊर्ध्वपुण्ड्रं द्विजातीनामग्निहोत्रसमो विधिः ॥
इत्यावश्यकता सिद्धा सर्वथा सान्तरं तु तत् ॥ २५५ ॥
चतुर्विंशतिमतव्याख्यायां मदनपारिजातसङ्ग्रहः ॥
एकान्तिनो महाभागाः सर्वभूतहितेरताः ॥
सान्तरालम्प्रकुर्वन्ति पुण्ड्रं हरिपदाकृतिम् ॥ २५६ ॥
॥ इत्यादि ॥ पाद्मे ऊर्ध्वपुण्ड्राध्याये ॥
ऊर्ध्वपुण्ड्रन्तु सर्वेषां न निषिद्धं कदाचन ॥
धारयेयुः क्षत्रियाद्या विष्णुभक्ता भवन्ति ये॥२५७॥
इति सर्वेषु वर्णेषु वैष्णवानां तदीरितम्॥निषिध्यते शिवेनैव पाद्मे भस्मत्रिपुण्ड्रकम्॥२५॥

विप्राणां नैव धार्य्यं स्यात्तिर्यक्पुण्ड्रादिधारणम्॥ नारायणात्परब्रह्मादन्येषामर्चनं न हि॥
ब्राह्मणः कुलजो विद्वान्भस्मधारी भवेद्यदि ॥ वर्जयेत्तादृशं देवि मयोच्छिष्टं घटं यथा ॥
त्रिपुण्ड्रं शूद्रकल्पानां शूद्राणां च विधीयते।त्रिपुण्ड्रधारणाद्विप्रः पतितः स्यान्न संशय इति
त्रिपुण्ड्रस्य विधिःशैवे निषेधः सर्ववैष्णवे॥अवैदिके तु शैवेवां तानि द्वादशनामभिः।२६२
अत आवश्यकं मालामुद्रावत्तिलकं शुभं ॥ तत्पाद्म उत्तरे खण्ड एकीकृत्य प्रशंसितम्॥२६३
(अध्याय १०) ये कण्ठलग्नतुलसीनलिनाक्षमाला ये बाहुमूलपरिशोभितशंखचक्राः ॥
ये वा ललाटफलके लसदूर्ध्वपुण्ड्रास्ते वैष्णवा भुवनमाशु पवित्रयन्ति २६४
त्रयमेकैकवादेन निबन्धस्यानुसारतः ॥
पुरुषोत्तमपादैः सप्रमाणौघं दृढीकृतम् ॥ २६५ ॥
तथा श्रुतिरहस्यादौ मयाप्यन्यत्र वारितः ॥ संशयस्तिलकद्रव्ये रुद्राक्षस्याप्यधारणे ॥

१ । २ उभयत्रवैषयिकमधिकरणं जात्यभिप्रायादेकवचनं सर्ववैदिकाः ३ शिवपूजादिकर्म भेदादिच्छातश्चतिर्यगूर्ध्वपुंड्रयोर्विकल्पः ४ ऊर्ध्वपुंड्राणि ५ ललाटेकेशवंविद्यान्नारायणमथोदरइत्यादिनोक्तैर्बहुग्रंथप्रसिद्धैः ६ ग्रंथांतरेषु इदानींसुसिद्धांतमतिरेष्यथंविषयोऽनेनकविनासम्यङ्निर्णीतः॥

आचारैरीदृशैः शुद्धैः श्रौतैः स्मार्तैः पुराणजैः ॥ सदाचाराऽज्ञातैः शुद्धःसेवेतोक्तप्रकारतः
लीलास्वादोऽनुभूत्येकवेद्योऽस्य स्यादनुग्रहात् ॥ ब्रम्हादिभिःप्रार्थ्यमानोऽप्येषामत्यन्त
दुर्लभः ॥ २६८॥

न स्वप्नेऽप्यक्षरजुषां केवलज्ञानिनामयम्॥मन्यते परमं मोक्षं ब्रम्हाहंमानमेव ते ॥ २६९॥
अहं ब्रम्हेति संसिद्धावक्षरत्वं भविष्यति॥न तेऽक्षरात्परं क्व विजानन्ति पुरुषोत्तमम् २७०
इत्यात्मलाभसन्तुष्टाः सात्विका भक्तिवर्जिताः॥लीयन्ते तेऽक्षरे ज्ञानघने सर्वे चिदंशकाः
नावर्तन्ते पुनर्मग्नाः सुखे संप्लुतवत्ततः॥ ददाति भगवान्प्रायो मुक्तिं भक्तःसुदुर्लभाम् ॥२७२
भगवान्भजतांमुकुन्दो मुक्तिं ददाति कर्हिचित्स्मन भक्तियोगम्॥अनिच्छतो गतिमण्वीं
प्रयुङ्क्ते ॥

भक्तस्य कृष्णसायुज्याद्रसपानं तटस्थवत् ॥ ममवज्ज्ञानिनां नैतत्तापशान्तिर्द्वयोःफलम्॥

१ नक्षुनिर्गुणाःसत्वात्संजायतेज्ञानं कैवल्यंसात्विकंज्ञानमित्यादिवचोभ्यः २ जीवा ३ जलंपिबतस्तीरस्थस्येव ४ रसास्वादनं ५ भक्तज्ञानिनोःसंसारतापस्यतटस्थानिपमयोग्रिष्मतपस्य च शांतिः

इति श्रीवल्लभाचार्य्यचारुभास्वद्विकासितम् ॥
सिद्धान्ताब्जं भजध्वं भो दैवभृङ्गारसार्थिनः ॥ २७४ ॥
बालानां बोधनायेह दिङ्मात्रं दर्शितं मया ॥
प्राक्तनेषु प्रबन्धेषु विस्तरस्तु विलोक्यताम् ॥ २७५ ॥
तदुच्छिष्टोपभोगेन शुद्धबुद्धेर्ममापि ये ॥ चन्द्रोदयादयो ग्रन्था अनुगृण्हीत तानपि २७६
प्रथमे यत्प्रकरणे प्रोक्तं संक्षिप्य तत्पुनः ॥ प्रपञ्चितं प्रकरणैश्चतुर्दशभिरुज्ज्वलम् ॥ २७७ ॥
पीनपैयोधरकान्तौ सैद्वृन्दावनविलासरुचौ ॥
राधायां श्रीकृष्णे रचय रैतिं दैर्पकोपमानपदे ॥ २७८ ॥
नोल्लासितेनैदीने कृतेऽपि भङ्गे नैवारिजातानाम् ॥

---

१ रसोभक्तिः पुरुषोत्तमेवा पक्षमरंदः २ कुचौमेघाश्च ३ समीचीनंवृंदावनं संतांवृंदस्यावनंरक्षणंच ४ भक्तिं ५ रूपादिगर्वरोषप्रणयकलहानांदर्पकस्यकामस्योपमायाश्च ६ नदीपतौसमुद्रे वस्तुतस्तुदैन्यवानेवोल्लासितोनत्वदीनः ७ कमलानां वस्तुतस्त्ववांचीनदुर्वादिरूपवैरिसमूहानाम्

द्विजेराजशब्दभाजो नमामि सदिनोदयान्निजाचार्य्यान् ॥ २७९ ॥

श्रीमद्भक्तिसुधाब्धिवर्द्धनविधौ संपूर्णचंद्रायितं दुर्वादोत्कटकुंभिदम्भदलने शार्दूललीलायितम्॥पादाब्जं भजतामशेषविदुषां मस्तेषु मालायितं येषांवाचो विसरा जयन्ति रुचिरास्ते विठ्ठलेशप्रभोः ॥ २८० ॥

यःश्रीमद्व्रजवल्लभाभिधगुरोः स्पृष्टः कृपादृष्टिभिर्बाल्येऽप्यात्रिखिलाऽऽगमांश्चनिपुणंताद्धनश्यामतः ॥

तूर्णवर्णयतेवहूनियुगपच्छ्लोकान्निशिष्टवस्तूनियोनानाकाव्यनिबन्धकृत्ससमभूद्गोवर्धनाख्यःकविः

पंचनदान्वयजनुपातेनांधेनापिसत्कृपैकदृशा ॥

भू १ हरि २ दुर्गा ९ शशि १ मितविक्रमवर्षेव्यधायि पञ्चदशी ॥२८२॥

---

१ चंद्रोब्राह्मणश्रेष्ठश्च २ दिवसेयउदयस्तत्सहितानितीविरोधः वस्तुतस्तुसतांवेदानांइनस्यहरेरुदयःकलौप्रकाशोयेभ्यस्तान् ॥ ॥ आत्रेयगोत्रेजातेनगोपीनाथांगजन्मना देवकीनंदनाख्येनगोवर्द्धनगुरोर्मुखात् ॥ अधीत्यतत्कृतंग्रंथंस्वस्यैवस्मृतयेमया ॥ दृतंकृतंस्फुटंसूक्ष्मंसरलंटिप्पणंशुभम् ॥ श्रीरस्तु श्रीःशमम् ॥

यो गोवर्द्धनवाक्सुधोदधिभवःसद्वाञ्छितार्थप्रदःस्वान्तध्वान्तनिवारकोऽगुरुघनश्यामो-
क्तिशाणोज्ज्वलः ॥

विद्वद्भिःकरुणापरैर्ह्रदिघृतःसोऽयंमहीमण्डलेयावच्चन्द्रदिवाकरंविजयतांवेदान्तचिन्ताम
णिः।इति श्रीमद्वेदव्यासविष्णुस्वामिमतपुण्डरीकमण्डलमंडनमार्तण्डश्रीमद्वल्लभाचार्यचर
णाब्जचंचरीकचित्तेन मोक्षगुरुस्वमातामहगोस्वामिश्रीव्रजवल्लभचरणैकतानेन तैलङ्गवेल्ल
नाटीज्ञातीयतित्तिरिशाखीयापस्तम्बबाधूलसगोत्रोद्भवपंचनदुपनामकघनश्यामभट्टात्म
जेन स्वपितृसकाशाल्लब्धविद्येन गोवर्द्धनाशुकविना कृते वेदान्तचिन्तामणौ साधनफला-
दिविवेकोनाम पञ्चदशंप्रकरणंसंपूर्णम् ॥ सम्पूर्णश्चायंवेदान्तचिन्तामणिः ॥ ॥

| | किं. | ट. ख. |
|---|---|---|
| इसब्नीतिकथा प्रथम भाग (कथा १-६० | ... ।≈ | -॥ |
| ,, द्वितीय भाग (कथा ६१-१२०) ... ... | ।= | -॥ |
| ऋग्वेदी नित्यविधि... ... ... | ।· | -~ |
| ऋग्वेदी देवे ... ...... | -॥ | -॥ |
| ऋणमोचनमंगलस्तोत्र ... ... | -। | -॥ |
| ऋतुसंहार काव्य–कालिदासकृत, मणिरामकृत टीकेसहित ... | ।· | -~ |
| ,, इंग्रजी टीपांसहित आणि शृंगारतिलक काव्य-कालिदासकृत ... ... | ।= | -~ |
| कथासरित्सागर–सोमदेवभट्टकृत | ६.॥ | |
| कादंबरी–बाणभट्टकृत, भानुचंद्र व सिद्धचंद्र यांच्या टीकांसहित | ६ | ।≈ |
| किरातार्जुनीय काव्य–भारविकृत, मल्लिनाथकृत घण्टापथटीकेसहित | २ | ।· |

| | किं. | ट. ख. |
|---|---|---|
| कुमारसंभव काव्य–कालिदासकृत, मल्लिनाथकृत (१-८सर्ग) व सीतारामकृत (८-१७ सर्ग) संजीविनीटीकेसहित... | २ | ।· |
| कुवलयानंदकारिका–आशाधरकृत, स्वकृत अलंकारदीपिकाटीकेसहित ... ... | ॥।· | -= |
| कृष्णसहस्रनाम ... ... | -= | -॥ |
| गणपतिस्तोत्र ... ... ... | -। | -॥ |
| गणेशाष्टक ...... ... | -। | -॥ |
| गणेशगीता (सार्थ) .. | -=। | -॥ |
| ,, (रे. पु) ... | ।.। | -॥ |
| गणेशसहस्रनामावलि ... | -–॥ | -॥ |
| गोपालसहस्रनाम, गोपालकवच व गोपालस्तवराज यांसहित ... | -=। | -॥ |
| ,, (रेशमी पुठा) ... | ।.॥ | -॥ |
| घटखर्परकाव्यसटीक ... | ॥= | -~ |

इति वेदांतचिंतामणिः समाप्तः